आरक्तानां नवमधु शनै रापिबन् पद्मिनीनां
कालोन्निद्रे कुवलयवने घूर्णमानस्सलीलम् ।
खिन्नो दानैर्विपिनकरिणां सौम्य सेविष्यते त्वा
मामोदानामहमहमिकामादिशन्गन्धवाहः ॥

णलंबोध्यम् वाचालानामित्यत्र आलजाटचौ बहुभाषिणि :
वक्तव्यमिति आलच् ॥ कंशिरोम्बुनोः इति विविष्किरपतत्रयः इ
स्याज्जल्पाकस्तुवाचालो वाचाटो बहुगर्ह्यवाक् इति मत्तेशौरः
इति चामरः.

अथ राजहंसस्य तवपथि राजोपचारास्संभविष्यन्तीति
गन्धवाह सेवामाह आरक्तानामिति हेसौम्य अनुग्र (अनेनसे
तीक्ष्णादुद्विजतेलोकइत्युक्तेः) गन्धंवहतीति गन्धवाहः मारुत
वांश्चेतिव्यज्यते) आरक्तानां ईषद्रक्तानाम् पक्षे अनुरागव
मदरागवतीनां वेतिव्यज्यते पद्मानि आसुसन्तीति पद्मिन्यः
तासां कमलसरसीनामित्यर्थः पद्मिन्याख्य स्त्रीविशेषाणामि
तत्सम्बन्धि ताभिरर्पितंच नवं नूतनं मधुमकरन्दं आसवंच शनैः
तथा आपिबन् आचूषयन्सन् । माधुर्यातिशयास्वादायमन्दं पि
(मारुतेहि वातिद्रवद्रव्यं शनैश्शुष्यतीतिभावः मधुपायिनोपि
पिबन्तीति प्रसिद्धिः) काले रात्रिसमये उन्निद्रे विकसिते कुव
लानां वनेसङ्गत इत्यर्थः लीलया सहवर्तत इतिसलीलं
घूर्णमानः परिभ्रमन् सन् (अनेन मधुपाननिमित्तमदाघूर्णितत्वं
एवं अह्निरात्रौच जलाशयप्रान्तगामिनोहंसस्य मारुतसेवाप्र
वनेषु गच्छतोपि तमाहखिन्नइति विपिनकरिणां वनगजानां

पर्याप्तं ते पवनचलितैरंगरागं परागैः
स्थाने कुर्युस्समसमुदयाद्बन्धवो बन्धुजीवाः ।
येनान्वेष्यस्य चलतनया पादलाक्षानुषक्तं
चूडाचन्द्रं पुरविजयिनः स्वर्णदीफेनपूर्णम् ॥ ॥१२

न्नः स्वेदयुक्तस्सन् (पद्मेमद्यपाननिमित्तः स्वेदः सूचितः) अतए
णां परिमळविशेषाणां अहमहमिकां अन्योन्यमुत्कर्षप्रकाश
[ आज्ञापयन् आमोदान् प्रेरयन्सन्नित्यर्थः त्वां सेविष्यते भां
ल्यसौरभ्यमान्द्यगुणसमृद्धमारुतः तवमार्गे वास्यतीति शुभनि
म् । मधुनो नवत्वविशेषणेन रुच्यातिशयो मादकत्वातिशय
। आमोदाना मितिबहुवचनेन पद्मकुवलयतत्तन्मधुगज दाना
गोगन्धा विवक्षिताः अत्र प्रस्तुते मारुतवृत्तान्ते वर्ण्यमाने अ
प्रेमार्पित मधुपानमत्त दक्षिण नायकप्रतीते स्समासोक्तिः
ना मद्दमद्दमिकादेशं प्रति आपिबन् घूर्णमानः स्विन्नः इतिवि
हेतुत्वात् काव्यलिङ्गम् ॥ गन्धोगन्धक आमोदे लेशे सम्ब
सएवद्रव्यवचनो बहुत्वे पुंसिचस्मृतः इतिकोशः । पद्मिनी स्त्री
[ सरस्यामम्बुजेपिचेतिविश्वः मधुमाध्वीकमद्ययोरित्यमरः । म
मरः । विमर्दोत्थे परिमळो गन्धेजनमनोहरे । आमोदस्सो
मरः । अतिनिर्हारी अतिदूरव्यापीत्यर्थः । अहमहमितिश
ाति अहमहमिकाक्रिया । अहमहमिकातुसास्यात् परस्परं यो
ः इत्यमरः. (१

बन्धुजीवद्वारापि मारुतस्त्वां सेविष्यत इत्याह पर्याप्तमिति
तुल्यात् समुदयात् उन्मेषात् तुल्यकालोन्मिषितत्वादित्यर्थः

योः शारदत्वादितिभावः बन्यवः स्वजनभूताः बन्धुजीवाः
बन्धुर्जीवः येषांते इति व्युत्पत्या बन्धुष्वतिमात्र प्रीतिमन्त इ
पवनेन मारुतेन चलितैः नुन्नैः परागैः पुष्परजोभिः तेतत्र
पूर्णां रज्यते अनेनेतिरागः अनुलेपनद्रव्यं अङ्गानां रागः तं
येयुः स्थानेयुक्तं - बन्धुत्वात् बन्धुजीवत्वाच्चेतिभावः । अङ्गर
नष्टि येन अङ्गरागेण अचलस्य हिमवत इत्यर्थः तनयायाः पुत्र
पादयोः चरणयोः लाक्षया अलक्तकरसेनेत्यर्थः अनुषक्तं स
मित्यर्थः अनेन शिवस्य पार्वतीपादपतनं व्यज्यते पुराविज
ञेतुः शिवस्येत्यर्थः अनेन तस्यमहान् उत्कर्षः सूचितः स्वर
स्थितायाः ) गङ्गायाः फेनेन बुद्बुदाकार जलपरिणामविशेषे
पूर्णमण्डलीकृत मित्यर्थः चूडा शेखरभूतः यश्चन्द्रः तं बाल
अन्वेष्यसि अनुकरिष्यसि । अनुपूर्वकादिणः सादृश्यार्थकात
कर्तरिलृट् तस्य सादृश्यार्थकत्वंच तमन्वेत्यनुबध्नाति तच्छील
तस्यवानुकरोतीति शब्दास्साधर्म्यवाचकाः॥' इति दण्डिव
अन्विष्यसीतिपाठे अन्विष्यसि अनुसरिष्यसि तत्सदृशो भ
अनुपूर्वकात् गत्यर्थकात् दैवादिकादिष्यतेः वर्तमानसामी
प्येति कर्तरिलट् । अत्र बन्धु बन्धुजीवशब्दयोः अङ्गरागा
प्रायकत्वात् परिकर परिकराङ्कुरौ चूडाचन्द्रमन्वेष्यसीत्यत्र
तोपमेतिकेचित् तथाचदण्डी । सर्वपद्मप्रभासारः समाहृ
त्वदाननं विभातीति तामभूतोपमां विदुरिति ॥ उपमान
अभूतोपमेतिभावः ॥ बन्धुस्वस्वजनास्समाइति युक्तेद्वेसा
चामरः । यद्यपिडिण्डीरोऽब्धिकफःफेन इत्यमरकोशेन फे

सूक्ष्माकारै दिनकरकरैः कल्पितान्तश्शलाकाः
शारोपान्ता श्शतमखधनु श्शेषचित्रांशुकेन ।
ऊढाःपश्चा दुचितगतिना वायुनाराजहंस
च्छत्रायेरन्नभासि भवतश्शारदा वारिवाहाः ॥ ॥१

---

तथापि तत्तुल्यत्वात् अन्यत्रापि प्रयुज्यते. (१
मारुतप्रेरितानां शारदमेघानां सेवाप्रकारमाह सूक्ष्मेति । हे
नेन छत्रोपचाराहर्त्वंद्योतितम् ) शरदिभवा : शारदाः ( अ
द्योतितम्) वारीणि वहन्तीति वारिवाहाः (अनेनतापप
तितन् ) सूक्ष्मः तनुः आकारः आकृतिः येषां तथोक्तैः
रः दिनस्यकरः दिनकरः सूर्यः तस्य करैः किरणैः कल्पि
ः अन्तश्शलाकाः अंशुकधारणाय अन्तः कल्पनीयशला
क्तः ( शलाकाछत्रकाष्ठी ) अनेन शलाकानां भास्वरत्वं
तमखधनुषः इन्द्रचापस्य तन्नामकस्य कान्तिविशेषस्येत्यर्थः श
चित्रांशुकं नानावर्णवस्त्रंतेन ( अत्र शेषशब्दः शरदिशैथिल
नसूचकः) शारः कर्बुरवर्णः कृष्णरक्तसितरूप इतियावत् उपा
गः येषां तथोक्ताः । पश्चात् पृष्ठतः उचिता योग्या गतिः ग
क्तेन त्वद्गत्यनुरूपगतिनेत्यर्थः वायुनामारुतेन ऊढाः धृत
भासि अन्तरिक्षे भवतः तव छत्रायेरन् छत्राणीवाचरेयुः ।
करादेः शलाकादित्वेन रूपणात् रूपकालङ्कारः दिनकर
ः वैय्यधिकरण्येपि नद्याशेखरिणे दृशातिलकिन इत्यादा
छत्रायेरन्नित्यत्र उपमा साचरूपकोत्थापितेतिसङ्करः॥ छत्र
र्थे कर्तुः क्यङ्सलोपश्चेति क्यङिसम्भावनायां कर्तरिलिङ्॥

द्रक्ष्यस्येवं प्रियसखसुखं लङ्घिताध्वासखीं ते
सीताक्षेत्रे जनकनृपते रुत्थितांसीरकृष्टे ।
गोपायन्ती तनुमपिनिजां या कथंचिन्मदर्थं
भूमौलोके वहतिमहती मेकपत्नीसमाख्याम् ॥

---

स्स्याच्छबळेवाच्य लिङ्ग इतिमेदिनी । कृष्णरक्तसितश्शार
न्तोच.

अथ गमनस्य अवान्तरप्रयोजनमाह द्रक्ष्यसीति । प्रियश्चा
तस्यसम्बुद्धिः हेप्रियसख प्रियमित्र अनेन अच्छलं मित्रभावेन
वलोकनमित्युक्त्या परदारावलोकनार्हत्वं सूचितं त्वं एवं उक्तप्र
अक्लेशं यथातथा लंघितः यापितः अध्वामार्गः येनतथोक्तस
सखीं वयस्यां सीरेण हलेन कृष्टेकर्षणं प्रापिते जनक इतिनृ
चेत्रे यज्ञियक्षेत्रे उत्थितां आविर्भूतां अनेन अयोनिजत्वं उ
तन्नाम्नीं (सीतालाङ्गलपद्धतिः तज्जातत्वात् तस्यास्तन्नामत्वं) द्र
लोकिष्यसे । गंगापतिव्रताचेतिद्वयं परमपावनं । यदेतत्तनुतेश्रे
स्मरणादिभिः इत्युक्त्या श्रेयस्करं तव तद्दर्शनं भविष्यतीत्यभि
स्तांविशिनष्टि । या सीतानिजां स्वकीयां तनुं मूर्तिमपि अपि
ज्यरक्षे दात्मानमात्मनेत्युक्त्या स्वार्थमेव अवश्य रक्षणीयाम
मह्यं इदं मदर्थं मत्प्रीत्यर्थं यथा तथा नतुस्वार्थंकथञ्चित् म
नगोपायन्तीरक्षन्तीसती भूमौलोके भूलोके महतीं पूज्यां ए
स्यास्सा एकपत्नी पतिव्रतासेतिसमाख्यां कीर्तिं (सम्यक् आख
समाख्या) वहति धारयतीत्यर्थः। वहतियः परितः कनकस्यर
युवराजएव वहति श्रीवीररुद्रो धुरमित्यादाविव अत्रापिवहतिरे

प्रक्षीणां त्वद्विरहसमये जातहर्षामिदानीं
प्रत्यायास्य न्ननुनयशनैः पद्मिनींस्वादुवाचा।
सातेतन्त्री स्वनसुभगया स्यादितीहाभ्यनुज्ञाम्
मन्येकुर्या न्मधुकरगिरा मैथिलीसौहृदेन ॥

अत्र परस्मैपदेन तत्फलस्यापि भर्तृगामित्वं सूचितं वासोङ्गरा
रमपिवास्वकं भर्त्रर्थं धारयेद्यातु सास्त्रीज्ञेया पतिव्रतेत्युक्तं
ाः पुष्कलमितिभावः अत्र उत्थितामिति विशेषणस्य उत्तरा
ेप विशेषणस्यच तद्दर्शनं श्रेयस्कर मित्यभिप्रायकतया परि
सखेत्यत्र राजाहस्सखिभ्य इतिसमासान्तष्टच् । गोपायन्तीत्य
त्वोः क्रियाया इतिवहनाक्रियां प्रतिहेतौ वर्तमानाद्धातोः ल
ातश्चेतिङीप् नित्यंसपत्न्यादिष्विति पतिशब्दस्यनुकि ऋन्नेभ्यः
ालांगलपद्धतिर्वैदेहीस्वर्गंगास्वितिमेदिनी । क्षेत्रं भार्याङ्गके
हयोनिषु इति रत्नमाला । यशःकीर्तिस्समाख्याचेत्यमरः.

एतावता संक्षेपेण हंसस्य दक्षिणदिग्गमने आतिशयं तत्र स
क्त्वा इष्टंहिविदुषांलोके समासव्यासधारण मित्युक्तरीत्या
स्तरेण वक्ष्यन् पूर्वोक्ते कमलसरसिस्थितायाः पद्मिन्याः राज
नुकूलदांपत्यमभिप्रयन् तयाऽभ्यनुज्ञातो गच्छेत्याह प्रक्षी
ं प्रियस्यतव विरहः वियोगः तस्यसमये काले वर्षास्वित्यर्थ
त्वेंण क्षयं प्राप्तां इदानीं सांप्रतं शरदि त्वय्यागतेसतीतिभा
पन्नः हर्षः प्रमदः यस्याः तथाभूतां । एतेन आर्तार्तेमुदितेहृ
लेनाकृशा। मृतेम्रियेतयानारी सास्त्रीज्ञेया पतिव्रतेत्युक्त पातिव्र
नुपेक्ष्यत्वं द्योतितं पद्मिनीहिवर्षासुक्षीयते शरदिवर्धत इ

नीं कमलिनीं स्त्रीविशेषञ्च प्रत्यायास्यन् प्रत्यागमिष्यन् सन्
ागमिष्यामीति निवेदयन्नित्यर्थः स्वादुथामधुरयावाचा गिराशं
सहसा तथासत्युद्वेगो भवेदितिभावः अनुनयसान्त्वय सा उ
नीं तन्त्र्याः वीणातन्त्र्याः स्वनःध्वनिरिव सुभगया मधुरया
नोतीतिकरः मधुनः करः मधुकरः तस्य भ्रमरस्य गिरावा
णां पद्मिनीसंबन्धित्वेन तेषांगीः पद्मिनीगीरेवेतिभावः अनेन
ो माधुर्यंव्यज्यते स्यादिति एवमेवभवत्विति तेतव कर्मणिष
स्मिन्कार्ये अभ्यनुज्ञां आभिमुख्येन अनुमतिं नत्वौदासीन्येन
या अप्यौत्सुक्यं सूचितं तत्रहेतुमाह मैथिल्यां सीतायां सौहृदे
पयेत्यर्थः कुर्यात् विरचयेत् मन्ये संभावये । वाक्यार्थः कम
यां लिङ् । नात्र अनुज्ञांकुर्यान्नवेति संशयितव्यं किन्तुमैथिल
र्यादेव अन्यत्रतु नकुर्यादेवेतिभावः 'तवहेतोर्विशालाक्षि नहि
यमिति' सीतांप्रति सरमोक्तिप्रकारेण सतीनां प्राणत्यागेनापि
पकार प्रवृत्तिस्वाभाव्यादितिभावः ॥ प्रत्यायास्यन्नित्यत्र ऌ
तृप्रत्ययः सौहृदेनेत्यत्र शोभनं हृदयंयस्यास्सा सुहृदयाकारुणि
नेत्र सुहृदितिनिपातनात् तस्याः भावः सौहृदं हायनान्त
गेति सुहृदयशब्दादणि तद्धितेष्वचामादेरितिवृद्धौ हृदयस्य हृ
ाहृदादेशः हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिस्तु ल
ोक्तयोः प्रतिपदोक्तस्यैवेति न्यायेन मित्रे निपातितस्य सुहृच्छ
ोध्यं अत्र प्रक्षीणां जातहर्षामिति विशेषणयोः अनुनयं प्रा
ाव्यलिङ्गं । पद्मिनीति विशेष्यस्य सौकुमार्यातिशयेन विरह
वाभिप्रायकत्वात् परिकराङ्कुरः । अयमपि पद्मिनीशब्द श्लेषम्

सार्धंकान्तैश्शबरसुदृशा मद्रिकुञ्जेषुरागा
दासीनानां क्षणमसमये दृश्यचन्द्रोदयश्रीः ।
उड्डीयेथा स्सरसिजवना द्दक्षिणाशानुसारी
पश्यन्दूरा त्प्रबलगरुतां पक्षिणांदत्तवर्त्मा ॥ ॥१६॥

---

ापित इतिसंकरः । तन्त्रीस्वनसुभगयेत्यत्रोपमा । अत्र रामभद्र
अनाहार्यसंभावनाया एव आचार्यैर्विवक्षिततया नोत्प्रेक्षावकाश
ा. (१५)

अस्मात् सरसिजवनादुत्पतेरित्याह सार्धमिति । कान्तैः प्रियैःसार्ध
ीणां गिरीणां कुञ्जेषु लता गृहेषु रागात् प्रियसंगबुद्धेः संभोगा
शेषादितियावत् रागस्तत्संगबुद्धिस्यादित्युक्तेः आसीनानां उप
ां शोभनेदृशौ यासांताः अनेन सौन्दर्यं व्यज्यते अंग प्रत्यंग
संन्निवेशोयथोचितः सुस्निग्धसन्धिबन्धस्यात् तत्सौन्दर्यमिति
लक्षणात् शबर्यश्चता स्सुदृशश्च तासां म्लेच्छजाति विशेषस्त्रीणा
कर्तरिषष्ठी असमये अकाले चन्द्रोदयानर्हकाल इत्यर्थः क्षण
नमित्यर्थः दृश्या दर्शनयोग्या चन्द्रोदयस्य इन्दूदयस्य उद्यच्च
ाः श्रीः शोभायस्मिन् तथाभूतस्सन् हंसगमनावस्याकालिव
धः क्षणदृष्यत्वं बोध्यं शबरसुदृशामित्यस्य दृश्येति समासैकदेश
ाय प्रतियोगिपदादन्यत् यदन्यत्कारकादपि । वृत्तशब्दैव
तस्यान्वय इष्यत इत्युक्त्याकारकस्यान्वयेदोषाभावात् अनुस
नुसारी दक्षिणाशां दक्षिणादिशं अनुसारी तथाभूतः दूरात् दृ
वनोयं पश्यन् मार्गं विलोकयन् प्रकृष्टं बलं शक्तिः येषां तादृशा
त्त्वाः येषां तादृशानां पक्षिणां भेरुण्डादीनां पतत्रिणां द

वितीर्णं वर्त्ममार्गः येनतथाभूतश्चसन् आत्मनः स्वस्त्ययनार्थं । विधातार्थंचेतिभावः सरसिजवनात् अस्मात्कमलवनात् उ आकाशमुत्पतेरित्यर्थः षष्ठस्तुपन्थ्या हंसानां वैनतेयगतिः परेत्यु डेतर पक्ष्यपेक्षया हंसस्य ऊर्ध्वगामितया तत्पर्यन्तोत्पतना प्रबलपक्षिणां मार्गंददत्सन् उत्पतेरितिभावः अत्रहंसे चन्द्रोदयां पात्तिदर्शनाभेदः पदार्थवृत्तिमध्ये केवदन्त्यन्यां निदर्शनामिां अत्र कान्तैः शबरसुदृशामित्युक्त्या आलंबनविभावस्य आलंब दीनपनविभावस्यच अद्रिकुञ्जेषु दृश्यचन्द्रोदय श्रीरितिच उ वस्य सार्धमासीनानामित्यनुभावस्य तदाक्षिप्तानां संचारिण संभोग शृंगारो व्यज्यते तदुक्तं अनुकूलौ निषेवेते यत्रान्योन्यं दर्शनस्पर्शनादीनि ससंभोग उदाहृत इति केचिदिमंरसाभा एकत्रैवानुरागश्चेत्तिर्यङ् म्लेच्छगतोपिवा । योषितो बहुसक्ति स्त्रिधामतइति, रसएवायमिति विद्याधरः तदुक्तं विभावादि प्रतिप्रयोजकः नविभावादिज्ञानं ततश्च तिरश्चामप्यस्त्येवरसइां म्लेच्छगतोपिकैमुत्येनास्तिरस इतिबोध्यं निकुञ्जकुञ्जौवाक्लीबे हितोदर इत्यमरः भेदाः किरातशबरपुळिन्दा म्लेच्छजात स्थौल्यसामर्थ्ययोश्शक्तौ बलं नाकाकसीरिणोः, गरुत्पत्तच्छद शबरशब्दात् जातिलक्षणङीषि पुंवत्कर्मधारयेत्यादिना पुंव: चन्द्रोदय श्रीरित्यत्रनेयङुवङ् स्यानावस्त्रीति नदीसंज्ञानिषे क्षणामित्यत्र अत्यन्तसंयोगेद्वितीया, अनुसारीत्यत्र आवश्यव निरिति अवश्यं भावविशिष्टे कर्तरिणिनिः, दूरादित्यत्र दूरा द्वितीयाचेति चकारात्पञ्चमी, उड्डीयेयाः डीङ् विहायसागतं

अङ्गीकुर्व न्नमृतरुचिरा मुत्पतिष्णोस्सलीलं
छायामन्त स्तवमणिमयो माल्यवानेषशैलः ।
शोभांवक्ष्य त्यधिकललितां शोभमानामतीन्दो
र्देवस्यादे रुपजनयतो मानसादिन्दुबिम्बम् ॥ ॥१७॥

कर्तरिलिङ्. (१६)

ात्संबन्धान्माल्यवतः अपूर्वाशोभासंभविष्यतीत्याह, अङ्गीकुर्व
णेःप्रकृतोस्मिन्मणिमयः (प्राचुर्येण प्रस्तुतं प्रकृतमित्युच्यते) रत्न
र्थः मणिरत्न इन्द्रनीलः वक्ष्यमाण निदर्शनानुगुणयात् मणिम
प्रतिबिंबग्रहणार्हत्वार्थमितिबोध्यं । माल्यवान् तन्नाम्नाप्रसिद्धः
न्नतरः शैलः अद्रिः लीलयासहवर्ततइति सलीलं यथा तथा
ः साधूत्पतनकारिणः इन्दुमतिक्रान्तः अतीन्दुः तथाभूतस्य
ाव: अतीन्दो इतिक्वचित् संबुध्यन्तः पाठः तव अमृतं सुधेव
नोहरा तद्वदवदातेत्यर्थः तां छायां प्रतिबिंबं अन्तः मध्ये
स्वीकुर्वन् सन् मानसात् मनसः आत्मीयादितिभावः इन्दु
मण्डलं उपजनयतः सृजतः चन्द्रमामनसो जातइतिश्रुतेः अत्र
ा चन्द्रस्य बहिर्निर्गमोन्मुखत्वावस्यासूच्यते आदेः जगत्कारण
नारायणस्य अधिकंललितारमणीयातां विस्पष्टपटुवत्समासः
ामनेन आमूललोलादिषुवृत्तिर्विस्पष्टपटुवन्मयूरव्यंसकादित्वा
ोभमानां दीप्यमानां शोभां श्रियं वक्ष्यति धारयिष्यति। अत्र
ते विशेषणस्य छायाग्रहणयोग्यत्वाभिप्रायकतया परिकरः
ारां अतीन्दोरिति विशेषणयोः चन्द्रसादृश्याभिप्रायकतय
ः । अनेन शोभां वक्ष्यतीति माल्यवति देवशोभावर्णनरूपाि

मार्गौसम्यङ् ममहनुमता वर्णितौद्वौतयोस्ते
सह्यासन्नो ष्यनघसुभगः पश्चिमोनित्यवर्षः ।
प्राचीनेतु प्रतिजनपदं संहतावद्भुतानां
मग्नादृष्टिः कथमपिसखे मत्कृतेतेनिवार्या ॥ ॥१

त्याप्यत इतिसंकर इतिसंक्षेपः मणिमय इत्यत्र तत्प्रकृतवचने नयट्। उत्पतिष्णोरित्यत्र अलंकृञित्यादिना तत्साधुकारिणिइष्णु दोरित्यत्र अत्यादयः क्रान्ताद्यर्थे द्वितीययेतिवार्तिकेनसमासः। वहतेर्भविष्यति कर्तरिल्लट्। उत्पतिष्णुस्तूत्पतितेत्यमरः छाया कान्तिः प्रतिबिंबमनातप इत्यमरः मध्येन्त रन्तरेणान्तरेन्तरा न्द्रः. (

थ अनुकूलं पन्थानमुपदिशति - मार्गाविति, प्रशस्ताहनुः अ हनुमान् प्रशंसायां मतुप् मत्करोत्सृष्टवज्रेण हनुस्तस्य तदाक्ष हरिशार्दूलो भविता हनुमानिति । इतीन्द्रोक्तत्वात्प्राशस्त्यं । तेनाद्वौ मार्गौ पन्थानौ प्राचीन प्रतीचीनावित्यर्थः सम्यक् यथा तथा मम मांप्रतीत्यर्थः वर्णितौ कथितौ मम हनुमते ना । तदामदीयेनेत्यर्थः तयोर्मार्गयोर्मध्ये ते तव अविद्यमानं यस्मिन् तथा भूतश्चासौ शोभनाः भगाः भजनीयवस्तूनि य भूतश्चेति खञ्जकुब्जादिवत्समासः त्वदपेक्षया अनघसुभगइ द्रवः पश्चिमः प्रतीचीनोमार्गः (कर्ता) सह्यस्य तन्नामकस्य पर्व न्नोपि सन्निकृष्टोपि माल्यवत्कुटुंबिनस्तत्र सह्योहि निकटवर्तीति सन्नइति मार्गस्यपरिचायकं विशेषणं) नित्यं अनवरतं वर्षं म् तादृशः भवतीतिशेषः सह्यस्य नित्यवर्षत्वेन तदासन्नो मा

भाव: सह्यासन्नोमार्ग: तत्रनिकटवर्त्यपि अनवसुभगोपि नित्य भीरो: तव त्याज्यएवेतिभाव:। ते सह्यं समतिक्रम्य मलयंच आसेदुरानुपूर्व्येण समुद्रं भीमनिस्वनमित्युक्त्या पश्चिममार्गस्य बोध्यं, यद्वापश्चिम: ते ।वसुभगोपि सह्यासन्न: अतएव भवतीतियोजना । ऋ .।तंसुभगइतिपाठे पश्चिम: सह्यासन्नोपि प्रतएव ते अनतिसुभगो भवतीतियोजना अतिसुभगोन भव भग: अयमेवपाठ: सुन्दर:। अथपरिशेषात् प्राचीनएवगन्तव्य: तो गमनप्रतिबन्धो मत्कृते त्वया कथमपि परिहरणीयइत्याह त्रीनेतु प्राग्दिग्भवे मार्गेतु तुशब्द: गमनप्रतिबन्धकसद्भावरूपं बोधयति ईदृशदोषाभावएव पश्चिमस्य अनवत्वमितिबोध्यं छ:पाठ: द्वौमार्गावित्युपक्रमानुगुणयात् प्राचीनेष्वितिपाठे तद त्क्षेप:। जनानांपदं जनपद: ग्रामसमुदाय: जनपदे जनपदे प्रति :सायामव्ययीभाव: अद्भुतानां चित्रवस्तूनां संहतौ बृन्दे मग्नाम दृढलग्नेत्यर्थ: ते तवदृष्टि: लोचनं ममकृते मदर्थे कथमपि न निवार्या निवारणीया यद्वा ते निवार्येतियोजना । कर्तरि नित्यवर्षइति विशेषणस्य त्याज्यत्वाभिप्रायकत्वात् परिकर:। गइतिपाठे अनतिसुभगत्वं प्रति नित्यवर्ष इत्यस्य विशेषणग । काव्यलिंग। उत्तरार्धे सखायं प्रतित्वयासत्वरं गन्तव्यमित्याज्ञा ते तस्यैव भंग्यन्तरेणाकथनात् पर्यायोक्तं। पर्यायोक्तंतुगम्यस्य तराश्रयमितिलक्षणात् ॥ पश्चिमइत्यत्र अग्रादि पश्चाडडिम ग्रेडिमच्। नाड्यप जनोपपदानि वृणाङ्गपदानी त्यनुशासनात् दस्यपुंस्त्वं ॥ हनुर्हनूस्तनुश्चैवमितिकोश: । प्राचीनं प्राग्भव

श्रुत्वाशब्दं श्रवणमधुरं तावकंपामरीणां
प्रत्यासन्ना त्सपदिभवना त्सादरंनिर्गतानाम् ।
अभ्रूभंगे प्यधिकसुभगै र्निश्चिताङ्गःकटाक्षैः
देशानेता न्वनगिरिनदी संविभक्तान्व्यतीयाः ॥

---

न्त्रिष्विल्यमरः । स्त्रियान्तुसंहतिर्बृन्दमित्यमरः । अर्थेक्तेच
ष्यर्थेऽव्ययसंज्ञिताविति नैघण्टुकाः.

अथ निकटवर्तिनां देशानां लंघनमर्थयते, श्रुत्वेति
श्रोत्रयोः मधुरं प्रियं तवायं तावकः त्वदीयः तं शब्दं निना
कराणं प्रत्यासन्नात् तवसमीपस्थात् भवनात् गृहात् सपदि
रेण सहवर्ततइतिसादरं यथातथा निर्गतानां निःसृतानां
व्यक्तिदिदृक्षयेतिभावः पामरीणां प्राकृतस्त्रीणां भ्रुवोः भंगः
अभावः अभ्रूभंगः तस्मिन्नपि भ्रूविकाराभावेसत्यपीत्यर्थः अ
मनोज्ञैः विस्पष्टपटुवत्समासः अनेन प्रकृत्यैव निरतिशयसौ
कटाक्षैः अपाङ्गदर्शनैः निश्चितानि निचितानि व्याप्तानीत्य
अवयवाः यस्यतथोक्तस्सन् अत्र अङ्गानां एकैकस्य
त्वोक्त्या दर्शनीयतमत्वं व्यञ्जितं वस्तुतस्तु निश्चितानि चरण
श्चरक्ता अन्यच्छ्वेतमितिरीत्या निर्णीतानीत्यर्थः अङ्गानि अ
तथोक्तस्सन्नित्यर्थः (नत्वङ्गीहंसोनिश्चितः तासांपामरत्वेन हं
त्वादितिभावः) वनानिच गिरयश्च नद्यश्च वनगिरिनद्यइतीत
ताभिः वनगिरिनदीविशेषैरित्यर्थः तेन जातिरप्राणिनामिति
द्वैकवद्भावस्य नावकाशः अन्तादिवच्चेतिसूत्रभाष्ये क्षीरोद
प्रयोगोऽत्रप्रमाणं बोध्यं । संविभक्तान् सम्यक्विभक्तान्

इक्षुच्छाये किसलयमयं तल्पमातस्थुषीणां
तल्लापैस्तै र्मुदितमनसां शालिसंरक्षिकाणाम् ।
कर्णाटान्ध्र व्यतिकरवशात् कर्बुरेगीतिभेदे
मुह्यन्तीनां मदनकलुषं मौग्ध्यमास्वादयेथाः ॥ ॥२०॥

---

ा केचिन्नयेति सम्पर्ग्विभक्तानित्यर्थः एतान् समीपवर्तिनः
ायान् व्यतीयाः व्यतीत्यगच्छेः नात्रकिंचिद्दर्शनीयमस्तीति
प्रत्र श्रवणमधुरमितिविशेषणस्य सादरनिर्गमहेतुत्वात् काव्य
भङ्गरूपकारणाभावेपि अधिकसुभगत्वरूप कार्यवर्णनाद्विभा
ावनाविनापिस्यात्कारणं कार्यजन्मचेदितिलक्षणात् । पाम
ावस्यवर्णनात् स्वभावोक्तिश्च । अत्र सादरनिर्गमन निरन्तर
नादिभिरनुभावैः औत्सुक्यादिभिस्संचारिभिश्च हंसनिनादाङ्ग
विस्मयस्य परिपोषादद्भुतरसोव्यज्यत इतिसंक्षेपः ॥ तावक
ादिमित्यणि तवकममकावेकवचन इतितवकादेशः । पामरीणा
ग्पल्यादेराकृतिगणत्वात्ङीष् । अभ्रूभंगइत्यत्र रक्षोहागमलघ्व
प्रयोजनमिति भाष्यप्रयोगात् अस्य अव्ययीभावेन, विकल्पः।
यत्र व्यतिपूर्वाकादिणः प्रार्थनायां कर्तरिलिङ् ॥ सद्यस्सपदि
मरः । विवर्णः पामरोनीचः प्राकृतश्चपृथग्जनइत्यमरः । कटा
र्शनेइत्यमरः । भरितं निचितं व्याप्तमितिहेमचन्द्रः । निमग्न
ब्दयोरिव निचितनिश्चितशब्दयोः एकार्थकत्वंबोध्यं । परन्तु
ब्दस्य निचितशब्दपर्यायतया प्रयोगान्तरमन्वेषणीयम्॥ (१९
कर्णाटान्ध्रदेशसंभेदसीम्नि शालिगोपीनां मौग्ध्यविशेषमनुभ
ाक्षिपति। इक्षूणां छाया इक्षुच्छायं तस्मिन्, किसलयाः पल्लवा

एव किसलयमयं तल्पंशय्यां आतस्थुषीणां आस्थितवतीनां
मितियावत् तैः अनिर्वचनीयैः सल्लापैः मिथोभाषणैः मुदितं ।
यासां तथोक्तानां कर्णाटानां अन्ध्राणांच निवासो जनपदः
अन्ध्राः तेषां कर्णाटान्ध्रदेशयोरित्यर्थः व्यतिकरस्य संपर्क
अधीनत्वाद्धेतोः कर्बुरे शबळे नानाजातीयइत्यर्थः मधुदुग्धा
वत् विलक्षणास्वादइतिभावः गीतीनां गानानां भेदे विशेषे
मोहं प्राप्नुवतीनां वेद्यान्तरशून्यमास्वादमश्नुवतीनामित्यर्थः
व्रीहीणां संरक्षिकाः पालिकाः स्त्रियः तासां मदनेन मन
आविलं अयथाभूतमित्यर्थः मौग्ध्यं मुग्धावस्थामित्यर्थः उदयद्
लज्जाविजितमन्मथेति मुग्धायालक्षणंबोध्यं, आस्वादयेथाः अ
पनवशात् मन्मथातिरेकेण व्रीडामान्द्ये तासां मुग्धावस्थापि
विलक्षणास्वादा भवतीतिभावः अत्र कर्बुर इति विशेषणस्य मे
काव्यलिङ्गं इक्षुच्छाय किसलयतल्प सल्लाप गीतिभेदादिभि
तदाक्षिप्तैरन्यैश्च शालिगोपीगतायारतेः परिपोषात् शृङ्गारः
संक्षेपः। इक्षुच्छाय इत्यत्र छाया बाहुल्य इति क्लीबत्वं किसलय
चिन्मयमित्यादाविव स्वार्थिकोमयट्. आतस्थुषीणामित्यत्र अ
स्थाधातोः भूतसामान्येलिटः क्वसुश्चेति क्वसुः उगितश्चेति ङीप्
छान्दसत्वेपि मूलवता कविप्रयोग बाहुल्येन भाषायामपि साधुत्व
किंच उपसर्गेण धात्वर्थो बालादन्यः प्रतीयते इत्युक्तया अ
भूधातोरिव अस्यापि अर्थान्तरपरतया सकर्मकत्वं कर्णाटान्ध्रेत
क्तवद्व्यक्ति वचन इत्यणोलुपि प्रकृतिवल्लिङ्ग वचने। शालिसं
संपूर्वाद्रक्षतेः कर्तरिण्वुलि टापि प्रत्यय स्थात् इतीत्वम् शेषषष्ठ्य

णोर्वासा दवनिवहना द्बद्धरत्नैश्शिरोभिः
स्साक्षा दयमिति जनैस्सम्यगुन्नीयमानः ।
र्युक्तो लघुभिरचिरान्मुक्त निर्मोककल्पैः
भावी तदनु नयने रञ्जयन्नञ्जनाद्रिः ॥ ॥२१॥

दे: णिजन्तात् कर्तरिप्रार्थनायां लिङ् । तल्पं शय्याट्टदारेषु भाषणंभियः इतिच अमरः त्रिष्वधीने वशो वाञ्छा प्रभुत्वा ति रत्नमाला कलुषं त्वाविले पाप इति मेदिनी॥ (२०) द्रिः तवनयनपदवीं अधिरोक्ष्यति इत्याह विष्णोरिति । स्वादानन्तरं तद्देशातिवर्तनानन्तरमित्यर्थः, विष्णोः नारा त् अवस्थानात् अवनेः भूमेः वहनात् धारणात् बद्धानि रत्नानि मणयः येषु तैः शिरोभिः शिखरैः उत्तमाङ्गैश्च नैः लोकैः कुशलैरित्यर्थः, अयंदृश्यमानोगिरिः साक्षात् अनन्तः स इति सम्यक् सोपपत्तिकम् यथातथा उन्नीयमानः विष्णुवासादि हेतूनामत्रापि सत्वादितिभावः अतएव लघुभिः ववमुपयातैः अनेन धवलत्वं सूचितं अचिरात् तदानमेिव : ये निर्मोकाः ईषदसमाप्तास्ते अचिरान्मुक्त निर्मोककल्पानि तिपाठे अचिरं उन्मुक्तानित्यक्तानीत्यर्थःतैः अभ्रैः मेघैः युक्तः नाद्रिः वेङ्कटगिरिः नयने तवलोचने रञ्जयन् प्रीणयन्सन् [ भावीभविता ॥ अत्र विष्णुवासादिभिः गिरेः शेषत्वानुमा नालंकारः । तदुत्थापिताचाभ्रेषु निर्मोक तादात्म्योत्प्रेक्षेति भावसङ्करः । इवादेरिव कल्पबादेरपिकिंचित् संभावनापरत्वम् देश्याद्याः स्पर्धिप्रतिभटादयः निभवद्वादयश्चापिकिंचित्

तत्रारूढै र्महतिमनुजैः स्वर्गिभिश्चावतीर्णै
संखोन्मेषा द्व्यपगतमिथ स्तारतम्यादिभेदैः ।
साधारण्या त्फलपरिणते स्संवशोबध्यमानां
शक्त्याकामं मधुविजयिन स्त्वंचकुर्यास्सपर्याम् ॥

---

संभावना पराइत्युक्तं द्रष्टव्यम् । नयनरञ्जनं प्रतिपूर्ववाक्यार्थ
काव्यलिङ्गं ॥ निर्मोककल्पैः इत्यत्र ईषदसमाप्तौ कल्पप् ॥ स
तुल्ययोरित्यमरः । शेषोनन्तोहरिश्शेषं त्रिष्वन्यदुपयुक्ततः । इ
समौकञ्चुक निर्मोकाविति (सर्पप्रकरणे) अमरः ॥ शेषस्य
अवनिवहनकथा वराहपुराणे. पृथिवी । मांसमुद्धृत्यपाताळात्
शोभिते । रत्नपीठइवोत्तुङ्गे सरत्ने अनन्तमूर्धनि । कृत्वामांसुरि
श्चापिन्यवेशयः । मद्धारणात्तमान् पुण्यान् त्वन्मयान्पुरुषोत्तम
तत्रैव पश्चाद्वराहोक्तौ महेन्द्रो मलयस्सह्यः सिंहाद्रिरपिरैवतः ।
नोनाम शैलस्स्वर्णमयोमहान् । एते शैलवरास्सर्वेत्वदाधाराव
न्तेनप्रतिपादिता । अत्र सिंहाद्रिर्वेङ्कटाद्रिरेव अतएव अग्रे
नाम वासुदेवालयोमहानिति भूम्याधारेषु गिरिषु वर्ण्यते वेङ्क
त्वमुक्तं ब्रह्माण्डपुराणे शेषस्य उक्तौयथाशेषे मदङ्केत्वं वैकुण्ठे
शैलाकारेच्चमद्देहे नित्यमत्रवसप्रभो इत्यादिना । वेङ्कटगिरेः
त्त्यत्वे हेतुः ब्रह्माण्डपुराणे ब्रह्मणोक्तः । अञ्जनेत्वंहिशेषाद
सुदारुणं । पुत्रंसूतवतीयस्मात् लोकत्रयहितायवै । प्रसि
अञ्जनेतवनामतइति ॥

अथ असंसेव्यहरिसाक्षात् दिव्यक्षेत्रातिवर्तनमित्युक्तं
परिहर्तुं त्वयापि तत्र भगवतस्सेवाकार्येत्याह. तत्रेति, म

ास्यचबध्यमाना मित्यनेनान्वयः । आरूढैः आरोहणं कृत
र्यान्तमितिशेषः) मनुजैः मानवैः अवतीर्णैः अवरोहणं
र्गिभिः देवैश्च सत्वस्य सत्वगुणस्य उन्मेषात् रजस्तमसो
उद्रेकात् हेतोः शुद्धसत्वमयोह्येषसाक्षाच्छेषात्मकोगिरिरि
हिम्नेतिभावः मिथः अन्योन्यं यत् तारतम्यं न्यूनाधिकभावः
यस्य तादृशोयोभेदः विलक्षणत्वं सः व्यपगतः विशेषेण
षां तथाभूतैस्सद्भिः आदिपदेन देवमनुष्यत्वादेर्ग्रहणं, मिथ
: स्वरूपसत्वेपि सत्वोन्मेषमहिम्ना तद्बुद्धिर्विगळितेतिभावः।
दिष्टानां परिणतेः परिपाकस्य साधारण्यात् तुल्यत्वात् संघशः
ाः बध्यमानां क्रियमाणामित्यर्थः मधुविजयिनः मधुरिपोः
सपर्यां पूजां त्वं चत्वमपि शक्त्याबलेन यथाशक्तीत्यर्थः
यथातथा कुर्याः विरचयेः । शक्त्यावञ्चितोमाभूरितिभावः
ावत्सपर्याकरणे ब्रह्मादीनामप्यक्षमतयायथा शक्तिकरणे कोम
ाचलयोर्विशेषइति न्यायेन तव अन्येषाञ्चसाम्यमेवेतिभावः॥
न्मेषेण सुराणां नराणांच विशेषानुपलंभवर्णनात् सामा
। सामान्यं यदि सादृश्या द्विशेषोनोपलभ्यत इतिलक्षणात् ।
रसामान्येन हंसस्यापि सपर्याकणरूपे प्रस्तुतवृत्तान्ते वर्ण्य
मेषात् साधारण्यात् इत्यादिविशेषणसाम्येन श्रीवैकुण्ठे नित्य
ाणेषु परमपुरुष कैङ्कर्येषु अर्वाचीन मुक्तस्यापि अन्वयरूपा
न्तप्रतीतेः समासोक्तिः । विशेषणानां साम्येनयत्प्रस्तुतव
स्तुतस्य गम्यत्वं सासमासोक्तिरिष्यत इतिलक्षणात् तथा अ‌ञ
रविभूत्युपमाऽप्यज्यत इत्यलंकारेणालंकारध्वनिः॥ आरूढैरवर्त

स्तोकोन्मग्न स्फुरितपुळिनां त्वन्निवासेच्छयेव
द्रक्ष्यस्याराः त्कनकमुखरां दक्षिणामञ्जनाद्रेः ।
आसन्नानां वनविटपिनां वीचिहस्तैःप्रसूना
न्यर्चाहेतो रुपहरतिया नूनमर्धेन्दुमौळेः ॥

---

गैरित्यत्र गत्यर्थाकर्मकेत्यादिना कर्तरिक्तः तारतम्येत्यत्र
भावः तारतम्यं ब्राह्मणादित्वात् ष्यञ् तरतमशब्दौ नित्यसमा
धिकार्थे रूढौ सुबन्तौ नतुप्रत्ययौ तथात्वे स्वातन्त्र्येण प्रयोगा
संघशइत्यत्र संघशब्दस्य बहुयकत्वं अङ्गीकृत्य बहुल्पर्यादिति
कर्तृकारकाच्छस् प्रत्ययः कामं प्रकामं पर्याप्तं निकामेष्टं
मित्यमरः.

अथाञ्जनाद्रेः दक्षिणतः कनकमुखराख्यान्नदीं द्रक्ष्यसीत्याः
त्वन्निवासे ( विश्रमाय ) स्थितौ इच्छयास्पृहयेव स्तोकं उन्मग्नं
प्राप्नुवत् ( आदिकर्मणिक्तः ) अतएव स्फुरितं विशदतया प्रव
पुळिनं तोयोत्थितद्वीपं यस्यास्तां दर्शयन्तिशरन्नद्यः पुळिनानि
रित्युक्तरीत्या व्यज्यमान पुळिनामित्यर्थः अञ्जनाद्रेः वेङ्क
आरात् समीपे दक्षिणां दक्षिणदिशि स्थितां सरळांच क
सुवर्णमुखराख्यां नदीं कनकैः भूषणैः मुखरां शब्द
द्रक्ष्यसि विलोकिष्यसे । तामेवविशिनष्टि । यासुवर्णमुखः
न्नानां निकटवर्तिनां वनविटपिनां अरण्यवृक्षाणां नत्वन्यदीय
वन्नत्व विशेषणेन स्वपोषितत्वं द्योतयता स्वप्रयत्नकृतत्वं व्यज्यते
कुसुमानि ( कर्म ) अर्धश्चासाविन्दुश्च अर्धेन्दुः बालचन्द्रः मौ
कूटे यस्य तस्य अर्धेन्दुः मौळिः शेखरोयस्येतिवा शिवस्य ।

त्वहेतुस्तस्य (हेतुरिहफलं) यद्वा अर्धेन्दुमौळेः (कर्तुः) वेङ्क
हितोरित्यर्थः वीचयस्तरङ्गा एव हस्ताः तैः उपहरंति नूनं,
अर्पयतीवेत्यर्थः यथा शुश्रूषमाणाशिष्यागुरोः एवमितिभावः
पुळिनत्वं प्रति अहेतोः इच्छायाः हेतुत्वेन संभावनात् हेतू
ोचिहस्तैरितिरूपकोत्थापिता कुसुमोपहारोत्प्रेक्षाच्च । किंच
वृत्तान्ते वर्ण्यमाने तत्सारूप्येण श्लिष्टविशेषणसाम्येन चाप्र
रागातिशयविगळित नीवीबन्धदर दृश्यमानस्फुरितजघनायाः
: रसिकायाः पुष्पापचय व्यग्रहस्तायाः कस्याश्चिद्वृत्तान्तस्य
ासोक्तिश्च । स्तोकोन्मग्न स्फुरितपुळिनां त्वन्निवासेच्छयेत्यत्र
प्रणयवचनं विभ्रमोहि प्रियेष्वितिन्यायेन प्रथममेव विभ्रमस्य
आदौवाच्यः स्त्रियारागः पुंसः पश्चात्तदिङ्गितैरित्युक्तः रागस्य
व्यज्यते॥ अर्धेन्दुमौळेरित्यत्र अग्रहस्तादिव त्समानाधिकरण
तत्र इन्द्रादिस्समुदायशब्दोऽवयवे वर्तते । प्रथमव्युत्पत्तौ गङ्गा
गत्वात् सप्तम्याः परनिपातः। चूडाशब्दश्शेखरपर्यायोपिदृश्यते।
विशुद्धसिद्धतटिनी चूडालचूडापद इत्यादिप्रयोगात् । अर्चा
षष्ठीहेतुप्रयोग इतिषष्ठी । उपहरतीत्यत्र पातुत्वप्रथमंपवस्याति
देवत् कालसामान्ये लट् । तोयोत्थितं तत् पुळिनमिति । आर
ारिति । भित्तंशकलखण्डेवा पुंस्यर्धइति । चूडाकिरीटं केश
ळयस्त्रय इतिचामरः ॥ शिवकर्मकार्चायां स्कान्दे सुवर्णमुर
र्गने अत्रास्तिभगवानीशः ख्यातोऽगस्त्येशसंज्ञया । स्थापितो
ना लोकानन्दविधायिना । स्नात्वातस्यां महानद्यां तल्लिंगं पू
दशानां अश्वमेधानां फलं संप्राप्नुवन्तित इत्युक्तं शिवकर्तृ

निर्विश्यैनां निभृतमनभि व्यक्तमंजुप्रणादो
मन्दाधूतः पुलिनपवनै र्वंजुलामोदगर्भैः ।
अव्यासंग स्सपदिपदवीं संश्रयान्यैरलंध्यो
बन्दीकुर्यु स्तटवसतयो माभवन्तंकिराताः॥

वेङ्कटेशकर्मकार्चायां वामनपुराणे वेङ्कटाचलमाहात्म्ये अगस्त
शेषाद्रेर्दक्षिणतस्त पस्यता शंकरेण परावरपतिर्देवो विश्वयोनिज
मयाचान्यैश्च विश्वात्माध्येयो नारायणोहरिः । नान्योध्येयः पु
पूज्योवानचविद्यते । तमृतेजगतांनाथं सर्वव्यापिनमीश्वरं । नारा
अस्मिन् वसत्येषसनातनः । नारायणोजगद्योनिः भगवान्पुरुषे
अस्मिन्यस्तंमनोयस्मात् मयासर्वेश्वरेहरौ । तस्मात्समागतं त्व
भाषेनचान्यथेत्युक्तंचप्रमाणम्.

अथ श्रमापनोदाय तत्रकिञ्चिद्विश्रम्य गच्छेरित्याह । निर्वि
एनाम्. सुवर्णमुखराम् । अनभिव्यक्तः अस्फुटः मञ्जुः मनोहरः
कृष्टशब्दः अनुरागजश्शब्दविशेषश्च यस्य तथाभूतस्सन् ।
नेश्चलम् यथा तथा गूढश्चेतिव्यज्यते । निर्विश्य उपभुज्य तत
पर्थः । वञ्जुळानां विकाराः वञ्जुळाः वानीरकुसुमानि तेषां
रव्यापको गन्धविशेषः सः गर्भेयेषांतैः । अनेन सौरभ्यमुक्त
ानां तोयोत्थितद्वीपानां पवनैः वातैः अनेन शैत्यं सूचितम्
यातथा आधूतः वीजितस्सन् अनेन पवनस्य मान्द्यं सूचितम् ।
सुरत श्रमस्सन्निितिचव्यज्यते । अविद्यमानः व्यासङ्गः अस्य
स्यतथोक्तस्सन् । अन्यैः तत्रत्यैर्जनैः अलङ्घ्यः अपरिभा
दवीं सरणिं सपदि तत्क्षणमेव संश्रय आश्रय । अलङ्घ्यामि

तुण्डीराख्यं तदनुमहितं मण्डलंवीक्षमाणः
तेलंयायाः क्षपितदुरितं तत्रसत्यव्रताख्यं ।
ात्यैरोषा त्सलिलवपुषो यत्रवाग्देवतायाः
:सेतुर्जज्ञे सकलजगता मेकसेतुस्सदेवः ॥ ॥२५॥

हंसानामित्युक्तरीत्यादवीयस्त्वेन दुष्प्रापामित्यर्थः । सपदि फलमाह । तटं कनकमुखरातीरम् वसतिः वासस्थानंयेषान्ते ज्ञेच्छजाति विशेषाः । भवन्तं त्वां मा बन्दीकुर्युः प्रग्रहंमाकु वेतु कुर्युरितिभावः ॥ अत्र हंसवृत्तान्ते वर्ण्यमाने विविक्तदे कीयासंभोगस्य शीतसुरभिमन्दानिलापनीतखेदस्य ईदृशन्या ाुतदनुबन्धि जनावस्कन्दनभीत्या त्वरितमपसर्पतोधूर्तस्य वृत्ता र इतिसमासोक्तिः ॥ वञ्जुळेत्यत्र वैकारिकस्याणोलुपि लुपि ्वचने इति प्रकृतिलिङ्गवचनत्वम् । संपूर्वकात् श्रिञ र्थनायांलोट् । माबन्दीकुर्युरित्यत्र अबन्दीं बन्दीं सम्पद्यमान ाकुर्युः । मास्तुमाकुर्वित्यादाविवायं निषेधेमाशब्दः नातोलुङ् शब्दस्यादनुरागजइति । निभृतविनीतप्रश्रितास्समाइति । निं स्म्यादिति । प्रग्रहोपग्रहौबन्द्यामितिचामरः. (२४

ुण्डीरमण्डले सत्यव्रतक्षेत्रङ्गच्छेरित्याह । तुण्डीरेति ॥ तद ाणानन्तरं महितं पूज्यमानं तेन सार्वकालिकं पूज्यत्वं फलितम् याख्यायस्य तन्मण्डलं देशंवीक्षमाणः पश्यन्सन् तत्र मण्ड ारस्तं दुरितं पापं येन तथोक्तम् । अतएवोक्तं हस्तिगिरिमाहात्म् ुतन्नामक्षेत्रं पापप्रणाशनमिति । सत्यव्रतमिति आख्यानामयः . सत्यफलाविसंवादिव्रतं शास्त्रीयनियमः यस्मिन्तदित्यन्वः

र्यसंज्ञा । "यानिवृतानितत्रैव कृतानित्रिगुणान्यपि । तानिसत्य तिसत्यव्रतंस्मृतम् ॥ इतिहस्तिगिरिमाहात्म्योक्तेः । चेत्तं ( ाक्त्या ) पुण्यं स्थानं यायाः गच्छेः याप्रापणे प्रार्थनायां ापणमिहगतिः तदेवविशिनष्टि । यत्क्षेत्रे सकलानां निखिला वनानां एकः अद्वितीयः सेतुः आळिः असङ्करकारकइत्यर्थ विधरण एषां लोकानामसंभेदायेति ' श्रुतेः सः प्रसिद्धः देवः सर्वभूतेषुगूढः ' इत्यादिषु श्रुतः नारायणः पत्यौ भर्तरिचित् षात् चित्तविकारविशेषात् स्त्रीपुंसयोरन्योन्य विषयश्चित्त रूपो विकारो रोषः सचप्रकृते पुरुषगोचरोऽवज्ञाहेतुकः । तद् नगदितस्त्रीणां रोषः पुरुषगोचरः । सपत्नीहेतुराद्यस्स्यादन्यस इति॥ सलिलं जलं वपुः शरीरं यस्यास्तस्याः नदीरूपायाइ ारां देवता अधिष्ठात्री तस्यास्सरस्वत्याः सेतुः आळिः जज्ञे ानीप्रादुर्भावे कर्तरिलिट् ॥ अत्रेयं हस्तिगिरिमाहात्म्योक्त धेया ॥ पुराकिलकृतयुगे विष्णुं साक्षात्कर्तुकामः तस्मिन् आत्मीयं मनः पश्यन् तच्छुद्धये सत्यव्रतक्षेत्रे अश्वमेधेन यक्ष्य ामिष्यतां सर्वेषां आवासाय विश्वकर्मणा काञ्चीन्नामनगरीं हस्तिशैलञ्च उत्तरवेदिं कारयित्वा केनापिनिमित्तेन पूर्वमेव ह वतीनदीं अध्यासीनां सरस्वतीं देवीं उपेक्ष्य तदंशभूतया स दीक्षितः अर्हणे नियुक्तैः द्विजोत्तमैः सादरं विशेषतः क्रियम नावनां दृष्ट्वासाभ्यसूयैरसुरैः अश्वमेधभंगाय तैस्तैरुपायैः को ात् महानदीरूपमास्थाय महतावेगेन सर्वं संक्षोभयन्तीं यज्ञ प्रवहन्तीं सरस्वतीं दृष्ट्वा भयविह्वलैः पौरजानपदैः विज्ञापिते

नारत्नै रुपचितगुणां नित्यसंगीतनादां
मेर्द्रक्ष्य स्युचितविभवं भूषणांतत्रकांचीम् ।
स्यांनित्यं निहितनयनो हस्तिशैलाधिवासी
न्द्वातीत स्सखलुपुरुषो दृश्यतेसत्यकामः ॥ ॥२६॥

याविष्टैः अभ्यर्थितो यजमानो ब्रह्मा भगवन्तं तुष्टाव । तदा
मानः प्रसन्नो भगवान् यज्ञवाटस्य पश्चिमे शेषपर्यङ्के शयानः
। ततस्सरस्वती सेतुभूतेन भगवतानिरुद्धतया गन्तुमशक्ता
भूत्वा बहुधा विप्रकीर्णा भगवतः पार्श्वद्वयेन सागरंप्रययौ ।
मत्या मुनिभिस्तुता सरस्वती दक्षिणतो वेगवतीनामकस्रोतो
विर्भूता पूर्वप्रार्थितं सर्वनदीश्रैष्ठ्यञ्च प्राप्य यज्ञशालामुपागम्य
रणीबभूवेति ॥ अत्र वर्णनीयस्य सत्यवृतक्षेत्रस्य सेतुभवन
न्देवचरितमङ्गतया वर्णित मित्युदात्तालङ्कारः । उदात्तमृद्धेश्च
श्चान्योपलक्षणमिति लक्षणात् ॥ उपलक्षणं, अङ्गं । अत्रद्वि
बोध्यम् । महितमित्यत्र मतिबुद्धीत्यादिना वर्तमानेक्तः। सेतु
नोति बध्नाति जलमिति सेतुः षिञ्बन्धने मण्डलं परिधौकोष्ठे
राजस्त्रिवतिमेदिनी । क्षेत्रं भार्याङ्गकेदारपुण्यभूगृहयो र्निष्वित
। सेतुराळौ स्त्रियां पुमानित्यमरः॥ (२५

सत्यवृतक्षेत्रे काञ्चीन्नामनगरीं द्रक्ष्यसीत्याह । नानेति । नान
: रत्नानि श्रेष्ठवस्तूनितैः उपचिताः अभिवर्द्धिता गुणा रामण
ध्यादयो यस्यास्तां अन्यत्र नानारत्नै रनेकमणिभिः उपचित
खचितइतियावत् गुणास्सौवर्णदामयस्यास्ताम् । नित्यः सार्वव
ाङ्गीतस्य नृत्तङ्गीतञ्च वाद्यञ्च त्रयं सङ्गीतमुच्यतइत्युक्तस्य तै

परपर्यायस्य नाम्नस्य नादोयस्याम् । अन्यत्र नित्यस्सन्त
षयसङ्गः विषयास्वाद इतियावत्. अतिशयितस्सोस्यास्ती
(अतिशायनेमतुप्) तेन इतः प्राप्तः आदरेणानुभूत इ
ध्वनिः यस्याः । यद्वानित्यः अनवरतः सङ्गीतः सम्यग्गी
त इतियावत् नादोयस्याः तथाभूताम् । भूमेः भुवः उचि
ः ऐश्वर्यं यस्य तथाभूतं भूषणं परिष्कारं भूमेस्तादृश य
र्थः । भूमिर्हिरत्नगर्भा वसुमतीतिचप्रसिद्धा. काञ्चीतु नान
त्यस्याः भूम्युचित विभवभूषणा भूतलं बोध्यम् । कस्याश्चित्तर
ज्यते. काञ्चीन्तन्नाम्नीं नगरीं तदुक्तं हस्तिगिरिमाहात्म्ये क
म तेन तत्राञ्चितोहरिः।अतःकाञ्चीतिविख्याता पुरीपुण्यवि
त्नमेखलां द्रक्ष्यसि आलोकिष्यसे तामेवविशिनष्टि यस्यामिति
द्वन्द्वातीतः।अशनायापिपासे शोकमोहौ जरामृत्यू सुकृतदु
द्वन्द्वम् । एवं सुकृतदुष्कृते सर्वाणिच द्वन्द्वानीतिकौषीत
शब्देन निर्देशात् । काम्यन्तइतिकामाः कल्याणगुणाः सत्य
ः यस्यतादृशः । पुरेशरीरे शेतइतिपुरुषः पुरसंज्ञे शरीरेरि
पुरुषोहरिः। शकारस्यषकारोयं व्यत्यासेन प्रयुज्यतइतिनिरु
उकार व्यत्ययोप्युपलक्षितः । अनेन सर्वशरीरकत्वमुक्तं । स
ः नारायणइत्यर्थः भगवानितिशब्दोयं तथापुरुषइत्यापि
वर्तेते वासुदेवेसनातन इतिस्मरणात् । प्रसिद्धिश्चास्य विश्वे
ः पूर्णं पुरुषेण सर्वमित्यादौद्रष्टव्या । द्वन्द्वातीतइत्यनेन नि
षत्वं सत्यकाम इत्यनेन कल्याणगुणाकरत्वं पुरुषइत्यनेन
तद्गतदोषास्पृष्टत्वञ्चसूचितम् । हस्तीतिशैलो हस्तिशैलः

याभूतस्सन् तदुक्तं । दिङ्नागैरर्चितस्तस्मिन् पुरानारायणःप्र
तगिरिर्नामख्यातिरासीन्महागिरेरिति । तेनगिरेरपि हस्तिसंज्ञ
अत एव हस्तीश सर्ववचसामवसानसीमेति पूर्वाचार्यप्रयोगः
शैल इतिवा यस्यां पुर्यां नित्यंसर्वदानिहिते न्यस्ते नयने नेत्रे ये
असन् तां नित्यं कटाक्षविषयीकुर्वन्सन्नित्यर्थः दृश्यते खलु अ
खलु जनैरितिशेषः अर्चारूपेणेतिभावः दृशेः कर्मणिलट् ॥ वे
तीरे पुण्यकोट्यां हरिस्स्वयम् । वरदस्सर्वभूतानामद्यापि पवि
गादि प्रसिद्धिः खल्वित्यनेनद्योतिता । अन्यत्र हस्तिनां गजानां । इ
स्याप्युपलक्षणं संबन्धीयः शैलः तमधिवसतीतितादृशः महाशै
र्ः अनेन विविक्तदेश सेवित्वमुक्तम् । द्वन्द्वं शीतोष्णादिरू
अनेन शीतोष्णादिसहत्वं उक्तं द्वन्द्वातीतोविमत्सर इतिस्मरणात
ब्रह्मकामयतइति सत्यकामः परब्रह्मप्राप्तीच्छुः ततोन्यत्र वितृष्णइ
सः उपासकतया प्रसिद्धः पुरुषः अधिकारीचेतनः यस्यां मे
त्यं सदासंभवकालइत्यर्थः निहितनयनः निक्षिप्तचक्षुः अने
अन्यत्र आकृष्टुमशक्यत्वं द्योतितम् दृश्यते जनैरितिशेषः। सवे
श्यत्सु त्यक्तलज्जाभयः लोकवेदविरोधमप्य विगणय्य मेखलामे
भावः ॥ अनेन लोकोत्तरो मेखलायाहारिभावोव्यज्यते ॥ य
क्षे भूमेः भूदेव्याइत्यर्थः तदानित्यः अनवरतः सङ्गीतः सम्यग्गीत
गाइत्येवार्थः । उत्तरार्धेपि हस्तिशैलाधिवासी द्वन्द्वातीतः सःपुरु
ख्यः यस्यां भूदेव्या मेखलायां नित्यं निहितनयनः अतएवसत्
ृतः कामः अभिलाषः यस्य तथाभूतस्सन् दृश्यते खल्वित्यर्
ृताप्रस्तुतयोर्नगरी मेखलयोर्योगपद्येन वर्णनात्प्रकृताप्रकृतगोच

तामासीदन्प्रणमनगरीं भक्तिनम्रेणमूर्ध्ना
जातामादौ कृतयुगमुखे धातुरिच्छावशेन ।
यद्वीथीनां करिगिरिपते र्वाहवेगावधूतान्
धन्यान्रेणू त्रिदशपतयो धारयन्त्युत्तमांगैः ॥

---

श्लेषः । नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रय इतिल नानारत्नैरुपचितगुणा मित्यादावभङ्गः नित्यसङ्गीतनादामित इतिसंक्षेपः । किञ्च नानारत्नैरित्यादिना समृद्धिमद्वस्तुवर्ण मित्यादिना श्लाघ्यचरितस्यान्याङ्गतया वर्णनाच्चोदात्तद्वयं लक्ष भूमेरुच्चितविभवमित्यत्रसापेक्षत्वेपि गमकत्वात्समासः तदुक्तं हवाक्येन समानार्थकताभवेत् । असौ समासोगमकस्सापेक्ष इति । द्वन्द्वातीतइत्यत्र द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमण य गाभि व्यक्तिष्वितिसूत्रेण अभिव्यक्तौ निपातितो द्वन्द्वश न्तसहचरिततया लोकविज्ञातत्वमभिव्यक्तिः । सत्यं का शीलिकामीत्यादिना अणोपवादोणप्रत्ययः ॥ नानानेकोभ रत्नं स्वजातिश्रेष्ठेपीति. तौर्यत्रिकं नृत्तगीतवाद्यं नाटयमिदंत्रयं सम्यग्गीतेतुसङ्गीतं न्यायारम्भेप्रसिद्धके । तूर्याणान्त्रितये र्णवः । काञ्चीस्यान्मेखलादाम्निप्रभेदे नगरस्य चेत्युभयत्रापि

अथ तान्नगरीं प्रणमेरित्याह । तामिति । आदौ पुराकृत तस्यमुखे प्रारंभे धातुः चतुर्मुखस्य इच्छायास्सङ्कल्पस्य वशेन जातामुत्पन्नां । यद्यपि विश्वकर्मणा काञ्चीनिर्मितेति दृश्यते रिच्छायाएवतत्रापि प्रयोजकत्वान्नदोषः अनेन महनीयत्व अतिशयोव्यज्यते । तां पूर्वोक्तां नगरीं काञ्चीं आसीदन्

तन्नोभवन्नितियावत् भक्तिः प्रीतिविशेषः (महनीयविषये प्रीति
च्यते) तयानम्रेण प्रह्वेण नतु नमितेन मूर्ध्ना शिरसा नवाङ्मा
मनोमात्रेणेतिभावः। प्रणम प्रणामं कुरुाणमुप्रह्वत्वे कर्तरिलोट्।
ामान्तरायोगात् मूर्ध्नेत्युक्तम्। अन्यथा विष्णोरायतनं दृष्ट्वा
मेत्तुयः। तस्यवृश्चन्तिमूर्धानं शतधायमकिङ्कराः इत्युक्तन्यायेन
पादितिभावः। प्रणामेहेतुमाह, यदिति तिस्रः उत्पत्तिस्थिति
दशाः वयोवस्थाः येषान्ते त्रिदशाः रूपं बिभ्रति सौमित्रे पञ्चविं
म्। इत्युक्त्या. सदापञ्चविंशतिवार्षिका नतुबाल्यादिमन्तइत्यर्थः
चतुर्मुखाद्याः नकेवलं त्रिदशाः किन्तु तत्पतयोपि सर्वइतिभावः
तेः हस्तिशैलनाथस्य वरदराजस्य वाहः वाहनं गरुत्मानित्यर्थः
अवधूतान् कम्पितान् विकीर्णानित्यर्थः अतएवधन्यान् पुण्य
: काञ्च्याः वीथ्यः पदव्यः रथ्याइतियावत् तासां रेणून्
माङ्गैः शिरोभिः नतुयैः कैश्चिदङ्गैः धारयन्ति वहन्ति। धृञ्
यस्माद्धोवादिकात्स्वार्थेणिच् तद्वीथीरेणूनामपीदृशमहनीयत्वे
यत्वं किमुवक्तव्यमितिभावः॥ * अत्र प्रणमेति वाक्यार्थं प्रति
त्यार्थस्य हेतुत्वात्काव्यलिङ्गम्। धन्यत्वं प्रति वाहवेगावधूत
ाङ्गधारणं प्रतिधन्यत्वस्य च हेतुत्वात्काव्यलिङ्गद्वयम्॥ त्रिदश
वशेष्यस्य सर्वोत्कृष्टा अपिधारयन्तीत्यभिप्रायकतया परिकरा
त्तमाङ्गैरित्यत्रापि उत्कृष्टै रङ्गै रित्यभिप्रायकतया परिकराङ्कुर
। * आसीदन्नित्यत्र आङ् पूर्वकात्सदेश्शतारिपाघ्राध्मेत्यादिना
। * मुखंप्रधाने प्रारम्भइतिधन्यं पुण्यवति त्रिष्विति. वीथीपङ्क्तौ
पकान्तरवर्त्मनोरितिचभेदिनी. त्रिष्वधीनेवशोवाञ्छा प्रभुत्वा

मन्दाधूता त्तदनुमहितो निस्सृतश्चूतषण्डात्
पार्श्वेतस्याः पशुपतिशिर श्चन्द्रनीहारवाही ।
दूरात्प्राप्तं प्रियसखमिव त्वामुपैष्यत्यवश्यं
कम्पापाथः कमलवनिका कामुकोगन्धवाहः ॥

---

नाइति. वाहोनायानेश्वे वृषभेपिचेतिच्चरत्नमाला उत्तमाङ्ग
ग्रमरः ॥

कम्पामारुतस्त्वां परिचरिष्यतीत्याह ॥ मन्देति ॥ तदनु
न्तरं तस्याः काञ्च्याः पार्श्वे पश्चभागे मन्दम् शनैर्धूया
: समन्तात्कम्पितात् चूतानां आम्रवृक्षाणां षण्डात् व
कदम्बे षण्डमस्त्रियामित्यमरः) निस्सृतः निर्गतः। अनेन
। पशुपतेः एकाम्रेश्वरस्य शिरसिशीर्षे यश्चन्द्रः तस्य
ः तं वहतीति तथाभूतः । ताच्छील्ये णिनिः तुहिन
हारात् चन्द्रकिरणेषु तुहिनमस्तीति चन्द्रनीहारेत्युक्तिः ।
ग्रतम् । कम्पायाः तन्नामकस्य स्रोतो भेदस्य पाथसि अ
वनिका पद्मवनी तस्याः कामुकः कामयिता तत्सम्बन्धि
स्य पाथस्सम्बन्धित्वोक्त्या कमलानां अम्लानत्व सौरभा
ध्यते अनेन मारुतस्य सौरभ्यं द्योतितं अत एव महित
धं वहतीति गन्धवाहः मारुतः दूरात् दूरदेशात् प्राप्तं
शिष्यादरणीयत्वं द्योतितं प्रियश्चासौसखाच प्रियसखः
त्प्राप्तं भवन्तम् अवश्यं नियतं उपैष्यति तव समीपम्
कमलवनिका कामुकेत्यनेन कमलवनिकाया उत्तमनारि
गृहस्यत्वश्चव्यज्यते ॥ अत्र मारुते वर्ण्यमाने तत्सा

ार्णस्तोमै रिवपरिणता सप्तभेदैर्महौघैः
ान्यामध्ये नगरमभित स्सेविताद्देवताभिः ।
वच्छस्वादु प्रसरसुभगा स्वामिनीवःकवीनां
ेगासंज्ञां वहतिमहतीं वल्लभापद्मयोनेः ॥ ॥२६॥

---

ितिथिसत्कारप्रवणस्य कस्यचिद्गृहस्थस्य वृत्तान्तः प्रतीयत
ि्तः ॥ प्रियसखमिवेत्यत्रोपमा ॥ (२८)
युष्मत्स्वामिनी नदीरूपेण प्रवहतीत्याह । वर्णेति ॥ मान्या
र्भिरितिभावः कवीनां कवयितॄणाम् जलचरपक्षिणाञ्च । वः
मेनी ईश्वरी वाग्देवतात्वादितिभावः पद्मयोनेः कमलसम्भवस्य
ता वल्लभा सरस्वतीत्यर्थः (कर्त्री) वर्णानां अकारादीनां
ैरिव सप्तसप्तसङ्ख्यावन्तः भेदाः प्रकाराः येषान्तैः । महान्त
प्रवाहाश्च तैः वर्णस्तोमानां सप्तभेदा अकारादिः क च ट त प
श्च । महौघानान्तु शुक्तिका कनकासृप्रा कम्पा पेयाचमञ्जुला।
सप्तैताः कीर्तितास्सप्त नामभिरित्युक्ताः । परिणता परिणामं
तरं प्राप्तेति यावत् नगरस्यमध्ये मध्ये नगरं अभितः उभ
येपीत्यर्थः देवताभिः अर्चारूपाभिः परदेवताभिः अर्चापेक्षं
वेता आश्रिता । वेगवत्युत्तरे तीरे पुण्यकोट्यां हरिस्स्वयमिति ।
भागं वेगवत्याश्च दक्षिणं । कामादधिवसञ्जीयात् कश्चिद
ति चोक्तरीत्या पार्श्वद्वयेपि भगवदर्चाभिस्सेवितेतिभावः ।
लिः स्वादुः मधुरश्च यः प्रसरः प्रवाहस्तेन सुभगामनोहराच
म् पूज्याम् वेगा वेगवतीतिसंज्ञां नाम वहति धारयति ॥ वर्ण
त्रोपमा । मध्येनगरमित्यत्र पारेमध्यइत्यव्ययीभावः । अभित

तीर्थेपुंसां शमितकलुषे तत्रसारस्वताख्ये
स्नात्वासार्धं मुनिभिरनघैस्सम्यगुल्लासितांगः ।
विश्वंचित्ते विगतरजसि व्यञ्जयन्तीमशेषं
वक्ष्यस्यंत र्बहिरपिपरां शुद्धिमक्षेपणीयाम् ॥

---

इत्यत्र पर्यभिभ्याश्चेत्युभयार्थेतसिल् ॥ भेदोद्वैधे विशेषेस्यादुप
णाइतिमेदिनी । ओघःप्रवाहो निवहइतिकोशः ॥

अथ तत्र अन्तर्बहिश्चशुध्यर्थं स्नायाइत्याह । तीर्थइति ॥
पुंसां पुरुषाणां जीवानामित्यर्थः अस्य कलुषेणान्वयः श
कलुषं वृजिनं येन तथोक्ते सापेक्षत्वेपि गमकत्वात्समासः ।
सारस्वतं तदिति आख्या नाम यस्य तथोक्ते तीर्थे ऋषि
सत्यव्रताख्येस्मिन् क्षेत्रे सकृदपित्वयि । स्नायात्ससर्वपापेभ्यो
संशयः । इत्युक्तामुनिभिस्तुष्टावसिष्ठाद्यैस्सरस्वती । नदीमध्या
शालामुपागमदित्युक्ते वेगवतीतीर्थइत्यर्थः अनघैः निर्दोषैः
शीलैर्महद्भिः (मननंनामोपासनालम्बनस्य पुनः पुनः संशी
सार्कं स्नात्वा आप्लुत्य अनेन सद्भिरेवसहासीत सद्भिः कु
सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेदिति शास्त्रार्थ
ग्यथा तथा उल्लासितानि उल्लासं प्रापितानि अङ्गानि अ
तादृशस्त्वम् । यद्वा मुनिभिरिति मध्यमणिन्यायेनोत्तर त्राप्य
मुनिभिः उल्लासितानि सादरपरिमार्जनेन शोधितानि प्रहर्ष
त्यर्थः अतएव विगतंरजः रजोगुणः यस्मात्तथोक्ते नीरजस्त
धिक इतियावत् । संभाषादर्शनंस्पर्शः स्मरणं कीर्तनंनतिः
किलैतानि साधूनामितिशुश्रुम । इत्युक्त्वा तेषां स्पर्शस्य प

तस्यास्तीरे सरसिजभुव स्सौम्यवैतानवेदिः
दिव्यंकुर्व न्द्रमिडविषयं दृश्यतेहस्तिशैलः ।
यस्योपान्ते कृतवसतयो यापयित्वाशरीरं
वर्तिष्यन्ते वितमसिपदे वासुदेवस्यधन्याः ॥ ॥३१॥

---

वृत्ते मनसि अशेषं कृत्स्नं विश्वं प्रपञ्चं व्यञ्जयन्तीं प्रकाशयन्तीं यते ज्ञानमित्युक्तेः । परां उत्कृष्टां अक्षेपणीयां केनाप्यनिवार : नैर्मल्यं अन्तः अन्तःकरणे बहिः बाह्येषु करणकळेबरेष्वपि रयिष्यसि । वहतेर्लृट् । तीर्थस्नानमुनिकरस्पर्शाभ्यां निर्मला भविष्यतीतिभावः ॥ * अत्र शमितकलुष इतिविशेषणस्य भिप्रायकतया परिकरः ॥ * निपानागमयोस्तीर्थं ऋषिजुष्ट ऽमरः॥ (३०)

स्यास्तीरे हस्तिशैलोदृश्यतइत्याह । तस्याइति ॥ हे सौम्यम । वेगवत्यास्तीरे उत्तरतटइत्यर्थः सरसिजातं सरसिजं तस्मा त्पद्यत इतिसरसिजभूः तस्य ब्रह्मणः वितानस्य यज्ञस्येयं चसावेदिश्च नागाद्रि परिसन्तक्ष्य निम्नोन्नतविवर्जितम् । तच्चक्रुः । चकारोत्तरवेदिकामित्युक्ते ब्रह्मवितानोत्तरवेदिभूतइत्यर्थः करिगिरिः द्रमिडइतिविषयो देशस्तं दिविभवो दिव्यः तं ाभिव्यक्तिमापन्न इत्याद्युक्त्या स्वस्यदिव्यत्वेन स्वाश्रयं द्रमिड याकुर्वन्नित्यर्थः दृश्यते विलोक्यते तमेव विशिनष्टि । यस्य ःय उपान्ते अन्तिकप्रदेशे कृतारचिता वसतिः वासः यैस्ते न्याः पुण्यवन्तः भगवत्प्राप्तिहेतुभूतसुकृतवन्तइत्यर्थःशरीरं वपुःय ापयित्वा इदञ्चकर्मकृतशरीरविषयं मुक्तावपि सशरीरत्वस्

संचिन्वाना तरुणतुलसी दामभिस्त्वामभिख्यां
तस्यांवेद्या मनुविदधती श्यामलंहव्यवाहम् ।
भोगैश्वर्यं प्रियसहचरैः कापिलक्ष्मीकटाक्षै
भूयश्श्यामा भुवनजननी देवतासन्निधत्ते ॥

त्वादितिध्येयम् । विगतं तमसः मूलप्रकृतेरिति वितमस्तस्मि
ितइत्यर्थः वसत्यसौसर्वत्र वसत्यस्मिन् सर्वमितिवा वासुः सर्व
तञ्च वसत्यत्रेतिवैयतः । ततस्सवासुदेवेति विद्वद्भिः परिकीर्त्यत
नात् । वासुश्चासौदेवश्च वासुदेवः तस्य नारायणस्य पदे स्थाने
त्यर्थः वर्तिष्यन्ते स्थास्यन्ति अत्र वासकरणापेक्षया भवि
तु श्रीरामभद्र कथनापेक्षया । तेन केषांचित् पूर्व
ासुदेवपदवर्तने नदोषः । दृष्टा मामुपेत्यतुकौन्तेय पु
ाद्यतइत्याद्युक्त्या न पुनरावर्तिष्यन्तइतिद्योतितम् यद्यपि भगव
स्य उपायोपकारकत्वं दिव्यदेशान्तरवाससाधारणम् । तथापि
रात्रंवा सप्तरात्रमथापिवा । निवसेद्यस्स सहसामुच्यते सर्वकिल्
ह्माणं प्रति भगवता वरदेन वरस्यदत्ततया अत्र अतिशय
स्योपान्त इत्यादिकमुक्तमित्यनुसन्धेयम् ॥ * अत्र धन्यत्वं प्रा
त्तित्वस्य वासुदेवपदवर्तनं प्रति धन्यत्वस्यच हेतुत्वात्काव्यलिङ्
सप्तसिजेत्यत्र सप्तम्याअनेर्डइतिडः तत्पुरुषेकृतिबहुळमित्यलुक्
त्र पुंवत्कर्मधारयेति पुंवद्भावः । दिव्यमित्यत्र द्युप्रागपागुदक्
चेति भवार्थेयत्प्रत्ययः । वितमसीत्यत्र निरादयः क्रान्ताद्यर्थे प
मासः॥ *सौम्योज्ञेनात्रिष्वनुग्रे मनोज्ञे सोमदैवतइति वसतिस्स्य
सिपामिव्याञ्च निकेतनइतिचमेदिनी क्रतु विस्तारयोरस्त्री वितान

दःपरिष्कृताभूमिरिति. देशविषयौ तूपवर्तनमिति सुकृतीपुराय
चामरः. (३१)
मन् हस्ति शैले कापि परदेवता सन्निधत्ते इत्याह । सञ्चि
याम् पूर्वोक्तायाम् वेद्याम् उत्तरवेद्याम् तरुणायाः यौवन
स्याः दामभिः मालाभिः (तुलस्या स्तारुण्योक्तया श्याम
ा) स्वाम् स्वकीयाम् स्वाभाविकीमित्यर्थः अभिख्यां शोभां
भामित्यर्थः सञ्चिन्वाना सञ्चितांकुर्वती उपचिन्वतीत्यर्थः
ामळम् नीलम् हव्यं वहतीति हव्यवाहः तं अग्निम् अनु
नुकुर्वती । इदञ्च तुरग सवन वेद्यां श्यामळो हव्यवाह इति
यनुरोधेन । शीतळमिति पाठे शीतल अनुष्णमित्यर्थः अनेन
ापि सर्वेषामाप्यायकत्वात् प्रसिद्धाग्निवैलक्षण्यम् द्योतितं ।
ावजन्य रसश्च ऐश्वर्यम् जगन्नियन्तृत्वञ्च तयोः अर्थाद्भगवत्स
दशयोः) सप्तमी । प्रियाश्चते सहचराश्च प्रियसहचराः तैः
ां ऐश्वर्यावस्थायाञ्च भगवतः प्रियसहचरैरित्यर्थः सहचराः
ाया इतियावत् केचिदप्रियास्सन्त एव सहकारिणो भवन्ति
प्रियेति । केचित्प्रियाअप्यसहकारिणो भवन्ति तद्व्यावृत्तये
लक्ष्मीकटाक्षास्तु भगवतः सर्वास्वप्यवस्थासु प्रियतमास्सन्त
रिणोभवन्तीति भावः । अनेन श्रियैसमस्तचिदचिद्विधान
। अङ्गीकारिभिरालोकैः सार्थयन्त्यै कृतोञ्जलिरित्याद्युक्तमनु
णाः श्रीदेव्याः कटाक्षैः अपाङ्गदर्शनैः भूयः अतिशयेनबहु
श्यामा श्यामला भुवनानां लोकानां जननी जनयित्री कापि
ोचरा देवता परदेवता संनिधत्ते सान्निध्यं कुरुते । अत

लक्ष्मीविद्यु ल्ललितवपुषं तत्त्वकारुण्यपूर्णां
माभैषीस्त्वं मरकतशिला मेचकं वीक्ष्यमेवं ।
शुद्धैर्नित्यं परिचितपद स्त्वादृशैर्देवहंसै
र्हंसीभूत स्सखलुभवता मन्ववायाग्रजन्मा ॥

[भु]वनजननीत्यादिना परत्वं वेद्यांसन्निधत्त इत्यनेन सौलभ्यः
म् ॥ अत्र श्यामळ हव्यवाहत्वेन संभावनायामभिसन्धावुत्प्रेक्ष
ऽहव्यवाहस्य उपमानत्वाभिसन्धौ प्राचाम्मतेन अभूतोपमा
न तु हव्यवाहस्य श्यामळत्वासंबन्धेऽपि तत्सम्बन्धोक्तिरू
त्युत्थापिता उपमेति ॥ अनुविदधतीति तु उपमोत्प्रेक्षयोस
ीतळमिति पाठेप्येवं ॥ किञ्च स्वतस्सिद्धस्य श्यामहिम्नः
क्ष्मीकटाक्षै रुत्कर्षवर्णनादनुगुणालङ्कारः प्राक् सिद्ध स्वगु
गुणः परसन्निधेरितिलक्षणात्॥ सञ्चिन्वानेत्यत्र संपूर्वाच्चिनो
ानच् । अनुविदधतीत्यत्र अनुविपूर्वकाद्धातेः कर्तरिशता ।
ुशब्दादीय्सुनि बहोर्लोपो भूच बहोरिती कारलोपे भूइत्य
भिख्यानामशोभयोरिति विष्टपं भुवनञ्जगदितिचामरः.

अथ मेघसदृशं भगवन्तम् वीक्ष्यमाभैषीरिति सहेतुकमाह
त्र उत्तरवेद्यां लक्ष्मीरिव विद्युत् तटित् तया ललितम् रु
ग्रहो यस्य तथोक्तम् अनेन पुरुषं कृष्णपिङ्गलमित्याद्युक्तम्
स्य कृष्णपिङ्गलत्वं एतन्मूलकमिति ज्ञापितं पिङ्गलाम् हेममा
क्ष्म्याः पिङ्गलत्वश्रुतेः । करुणैव कारुण्यं तेन पूर्णां पूरितं अत्र
ाद्युत्त्वरूपणेन कारुण्येऽनुक्तमप्यप्लवरूपणं गम्यते । मरतका
तं सेवमेचकं श्यामलं । यद्यपि मरतकं हरितमित्येव प्रसिद्धि

नणिरिति व्यवहारश्च तथापि गुणवत्तरस्य मरतकस्य रत्नवित्स
ालिम भूयस्त्वमवलम्ब्य मेचकत्वोक्तिः । अत एव घासश्याम
ाणीन् । शुकाङ्ग नीलोपल निर्मितानामित्यादयः प्रयोगाः ।
ारं भगवन्तमित्यर्थः वीक्ष्यदृष्ट्वा माभैषीः मालसीः । तत्र हेतुः
ेति स पूर्वोक्तो मेघः शुद्धैः धवळैः अन्यत्र अक्लेशैः अत एव ह
न्ति ज्ञानविषयीभवन्तीतिखादृशास्तथोक्तैः उभयेषामपि शुद्ध
वः । देवानां हंसैः देवसम्बन्धिभिर्मराळैरित्यर्थः अन्यत्र हंस
ः श्रेष्ठाः देवानां हंसास्तैः नात्र निर्धारणे षष्ठी निर्धारणस्य त
र्यमाणस्यच योग एव तत्प्रसरात् किन्तु शेषे । नातो न नि
निषेधावकाशः । देवा हंसा इवेत्युपमित समासो वा देवश्रेष्ठा इ
त्तरपदेव्याघ्र पुङ्गवर्षभ कुञ्जराः । सिंह शार्दूल नागाद्याः पुं
चरा इत्युक्ते नागाद्या इत्याद्यपदेन हंसपदस्यापि गृहीतुमुचित
नित्यसूरिभिरित्यर्थः नित्यम् सदा परिचितं परिशीलितम् पदं
ो यस्य अन्यत्र परिचिते सेतिते पदे पादौ यस्य तथोक्तः
ः संपद्यमानो भूतः हंसीभूतः अत एव भवताम् युष्माकं हंस
ः अग्रे पूर्वम् जन्म जननं यस्येति व्यधिकरण बहुव्रीहिः
ा अग्रजन्माखलु कुलकूटस्थः खल्विवत्यर्थः । खल्वित्यनुनये ।
तामनुकूल व्यवसायः कूटस्थतयावतीर्णश्च । नातस्तस्माद्धेतव
ाः ॥ अत्र विषयभूत भगवन्निगरणेन मेघतयाध्यवसानात्
दिनाप्रसिद्धमेघादुत्कर्षस्य वर्णनाच्चाधिकाभेद रूपकातिशये
श्च लक्ष्मीविद्युदित्येकदेश विवर्तिरूपकेण मरतकशिला मेचव
ाच्चोत्थापिता । किञ्च उत्तरार्धवाक्यार्थेन माभैषीरित्यस्य सम

सारास्वादी सवनहविषां स्वामिनस्तेसदेवः
शुद्धंचक्षुः श्रुतिपरिषदां चक्षुषांभागधेयं ।
अङ्गीकुर्या द्विनतममृता सारसंवादिभिस्त्वा
माविर्मोदै रभिमतवर स्थूलक्ष्यैःकटाक्षैः ॥

---

व्यलिङ्गम् । तच्च शुद्धैरित्यादिश्लेषभित्तिकाभेदाध्यवसायम्
क्त्यनुप्राणितमिति संक्षेपः ॥ कारुण्येत्यत्र चातुर्वर्ण्यादित्वा
पूर्णमित्यत्र कर्मणिक्तः वादान्तेत्यादिना निपातनात्साधुः मा
धातोः कर्तरिलुङ् नमाङ्योग इत्यट्प्रतिषेधः॥ हारभेदे विल
चारुणि त्रिष्विति रत्नमाला । पदं व्यवसितत्राण स्थान लक्ष
ष्विति । निषेध वाक्यालंकारजिज्ञासा नुनये खल्विति चामरः
अथ परीत्यदेवदेवेशं प्रणम्यात्मानमर्पयेत् । इत्युक्तप्रकारे
सदेवः कटाक्षैः अङ्गीकरिष्यतीत्याह । सारेति ॥ ते तव स्वा
चतुर्मुखस्येत्यर्थः सवनस्य यज्ञस्य हविषां (वपादि) होतव्यद्र
स्थिरांशं आस्वादयतीति तादृशः ताच्छील्येणिनिः हविस्स
नित्यसापेक्षत्वात्समासः । अत्र सहस्रादित्यसङ्काशे विमाने
तिष्ठन्तं हविरश्नन्तं ददृशुस्तेदिवौकस इत्युक्ता कथानुसन्धेय
वेदानां याः परिषदोगोष्ठ्यः तासां स्त्रीलिङ्गेन कासाञ्चिद्र
प्रतीयते। शुद्धं निर्दोषं चक्षुः नयनं चक्षुरिन्द्रियभूतइत्यर्थः
त्कर्तृकस्य सर्वविषय साक्षात्कारस्य भगवदधीनत्वात् चक्षुष्ट्वं
कथं श्रुतीनां नित्यत्वे तासां सर्वविषयावगाहस्य भगवदधी
नाशङ्क्यम् । नित्यानामपि भगवन्नित्येच्छाधीनत्वमिति संप्रद
देव मनुष्याणां वेदश्चक्षुस्सनातन मित्युक्तरीत्या सर्वेषां चक्षु

मध्वासक्तं सरसिजमिव स्विन्नमालम्बमानो
देव्याहस्तं तदितरकर न्यस्तलीलारविंदः ।
देवःश्रीमा न्सयदिविहरे त्स्वैरमारामभूमौ
व्यक्तोवाल व्यजनवपुषा वीजयेस्तंत्वमेव ॥

---

पि चक्षुर्भूतइत्यथः । यथा पितृदेवमनुष्याः प्रमाणान्तरा गोच
विदेन पश्यन्ति प्रत्यक्षेणानुमित्याच्चापस्तूपायेनबुध्यते एनं
न तस्माद्वेदस्य वेदतेत्युक्तेः तथा वेदोपि प्रसन्नेन भगवता प
त्रः ॥ यद्वातासां सर्वविषयावगाहनशक्तिः चक्षुष्ट्वेनाध्यव
तुत्वाद्भगवतस्तत्वेन व्यपदेशः । श्रुतिपरिषदां चक्षुरित्यनेन त
मास्पदत्वं भगवति व्यञ्जयता परमतात्पर्यविषयत्वमुक्तं भवति ।
वेषां) नयनानां भागधेयं भाग्यं भाग्यपरिणामभूतइत्यर्थः
देवो भगवान् विनतं प्रणतं त्वां चतुर्मुखस्यौपवाह्यामितिभावः
न् मोद उन्मेषोयेषुतैः सादरोल्लासैरित्यर्थः अत एवामृतानां
सारैः धारासंपातैः संवदन्ते संवादं कुर्वन्तीतिताद्दशैः (संव
म्) अमृतासारसदृशैरितियावत् । अनेन जगदुज्जीवकत्वभोग्य
ज्यते । अत एवाभिमतानामभीप्सितानां वराणां प्रसादलभ
लक्षैः वदान्यैः । अनेनास्य देवस्य वरदइतिनामसूचितम् ।
पाङ्गदर्शनैः अङ्गीकुर्यात् स्वीकुर्यात् परिजनाविशेषेणेतिभाव
गवतश्चक्षुष्ट्वेन भागधेयत्वेन च रूपणाद्रूपकद्वयम् । अमृतास
रित्यत्रोपमा । सदृक्सदृशसंवादिसजातीयानुवादिन इति सं
गपि उपमावाचकेषुगणनात् । विनतमित्यस्य अङ्गीकारहेतुत्वा
तङ्कश्च । हविर्होतव्यमात्रेच सर्पिष्यपि नपुंसकमितिमेदिनी ।

परिषद्गोष्ठी सभासमितिसंसदइति. दैवन्दिष्टं भागधेयं विधिरिति. धारासंपात आसारइति स्युर्वदान्य स्थूलल प्रदे इतिचामरः। देवप्रसादे वरणे जामातरिवरः पुमा

अथ प्रीतिसंहृष्ट सर्वाङ्गस्स्तुत्वाचापिविलोकयन् । नियतात्माययोचितमित्युक्तरीत्या भगवत्प्रसादस्य फल इत्याह मध्विति ॥ सः पूर्वोक्तः श्रीमान् श्रियानित्ययुक्त स्विन्नं स्वेदयुक्तं अनेन सात्विकोद्भेदउक्तः अतएव आसक्तं संबद्धं. आसिक्तमितिपाठे आर्द्रीकृतमित्यर्थ मिवस्थितं देव्याः महादेवीनाम्न्याः श्रीदेव्याः । इत्यादिश्रुत्या लक्ष्म्या महादेवीनामत्वं । हस्तं पा गृह्णन् तस्मादालम्बितात् इतरस्मिन्नन्यस्मिन्करे देव्याह लीलारविन्दं विलासार्थपद्मं येन तथोक्तस्सन् लीलाया घासादिवत्तादर्थ्यषष्ठ्यास्समासः इदं विहारान्तरस्याप्युप उपवनस्य भूमौ प्रदेशे स्वैरं स्वच्छन्दं यथा तथा विहरे च्चेत् तदा त्वमेव वालव्यजनं चामरं तस्यवपुषा रूपे स्सन् तदेवं वीजयेः वीजनेन परिचरेरित्यर्थः। यथा स्वै रविच्छेदोनभवेत्तथा वीजयेरितिभावः। त्वमेवेत्येवकारेण त्तामाभूदिति द्योतितम् यत्रयत्र चरेत्तस्मिन् वने त्व तत्रतत्रचचारोच्चैः पक्षौविस्तार्य पक्षिराडिति हस्तिगिरौ छत्रात्मना गरुडइव वालव्यजनात्मनात्वमपि परिचरेरिति कादाजगतिकुत्सनयोरिति धातोर्णिजन्तात्कर्तरि प्राप्त

*अत्र वालव्यजनवपुषेति अन्यधर्मस्य हंसे आरोप

जातप्रीति र्जनपदमथो मध्यमंलङ्घयित्वा
दूराल्लक्ष्य क्रमुकनिवह श्श्यामलान्याहिचोलान् ।
प्रत्युद्गच्छ न्मकरवलन स्तम्भितैस्सह्यजायाः
स्रोतोभेदै र्विविधगतिभि स्संविभक्तावकाशन् ॥३६॥

---

सिजमिवेत्यत्रोपमा । * मधुमद्येपुष्परसइत्यमरः. (३५)
ोळदेशं गच्छेरित्याह । जातेति ॥ अथो वरदराजसेवानन्तरं
त्यनेनान्वयः जता उत्पन्नाप्रीतिः प्रमोदो यस्य तथोक्तस्सन्
(ञ्चीचोळदेशयोः) मध्यभवं जनपदं ग्रामसमुदायं लङ्घयित्वा
ात् दूरं । लक्ष्याः दृश्याः । अनेन औन्नत्यं व्यञ्जितं । येक्रमु
ाकृणान्निवहाः समूहाः तैः श्यामळान्कृष्णान् अनेन रमणीयत्व
देकं व्यज्यते । प्रत्युद्गच्छतां (स्रोतसः) प्रतीपमुद्गच्छतां
ात्स्यविशेषाणां वलनेन इतस्ततस्सञ्चारेण स्तंभितैः निरुद्धैः
ाराणामतिस्थूलत्व दीर्घत्वादिकं व्यञ्जितम्) मकरवलयेतिपाठे
नरः । अत एवविविधा बहुमुखा उत्कूलेतियावत् गतिः गमनं
ह्ये तन्नामके पर्वते जाता सह्यजा कावेरी तस्याः स्रोतोभेदैः
भैः संविभक्ताः संविभागं प्रापिताः अवकाशाः प्रदेशाः येषां
(एतेन चोळावकाशानामारामादिसमृद्ध्या रामणीयकं व्यज्यते)
निवासोजनपदश्चोळास्तान्देशविशेषान् याहि प्राप्नुहि । याप्रा
मिहगतिः प्रार्थनायां लोट्॥*अत्र क्रमुकनिवह श्यामळत्वादि
तुवर्णनादुदात्तम् । तच्च प्रत्युद्गच्छदित्याद्युक्ताद्भुतातथ्यवस्तुवर्ण
त्यनुप्राणितमितिसङ्करः । अत्युक्तिरद्भुतातथ्य शौर्यौदार्यादि
ालक्षणात् । लौकिकार्थमतिक्रम्य प्रस्थानं यत्रवर्ण्यते । तद

सन्ध्यारागं सुरभिरजनी सम्भवैरङ्गरागैः
केशैर्ज्योत्स्ना कलहितिभिरं पाळिकापीडगर्भैः ।
आबिभ्राणा स्सरसिजदृशो हंसदोलाधिरोहा
दाधास्यंते मदकलगिर स्तेषुनेत्रोत्सवंते ॥

क्तिरितिप्रोक्तं गौडानां मनसोमुदइत्युक्तेश्च ॥ *दूरादित्यत्र दूर
न्यइतिपञ्चमी असत्ववचनोयम् मध्यममित्यत्र मध्यान्मइति भवा
मङ्गळानन्तरारंभ प्रश्नकार्त्स्न्येष्वथोअथेति वारटातुपूगःक्रमु
द्रेदाश्शिशुमारोद्रशङ्खोमकरादयइति, कवेरकन्याकावेरीसह्यये
रोतिचामरः.

अथ तत्रारामादिषु विहरमाणा ग्रामरमणीर्द्रक्ष्यसीत्याह सन
हंसतेषु चोलेषु सुरभिः सुगन्धिः या रजनी हरिद्रा संभवन्तीति
भि रजन्यास्संभवास्तथोक्तैः अङ्गानां रागैः अनुलेपनद्रव्यैः सन
ं आरुण्यं पालिकाः क्रमुककुसुमानि ता एव आपीडः शेखर
ान्तैः केशैः कबरीभिरित्यर्थः ज्योत्स्नयाचन्द्रिकया कलहः ।
त्स्नाकलहः सोस्यास्तीति तथोक्तम् ज्योत्स्ना मिश्रितमित्यर्थः
श्च आबिभ्राणाः दधानाः मदेन यौवन जनितेन मदिराजनि
त्तविकारविशेषेण । तदुक्तम् । मदिरादिकृतो मोह हर्षव्यतिक
े आदिना यौवनादेर्ग्रहणं । कलाः अव्यक्तमधुराः गिरोवाचोयास
ः । सरसिजे इव दृशौ यासान्तास्तरुण्यइत्यर्थः डोळायाः प्रे
याः अधिरोहात् आरोहणाद्धेतोः । यद्वाडोलाधिरोहं विधायेति
पे पञ्चमी । ते तव नेत्रयोः नयनयोः उत्सवं हर्षजनकव्यापारं
पमित्यर्थः उत्सूते हर्षमित्येष उत्सवः परिकीर्तितइत्युक्तेः । आध

पृथ्वीलीला तिलकसुभगं पश्चिमंभागमेषां
नाम्नावर्षं जलचरनदी मातृकंगाहमानः ।
द्रक्ष्यस्यारा त्परिमिततया मग्नकैलासदृश्यं
श्वेतंशैलं फणिपतिमिव क्ष्मातलादुज्जिहानम् ॥ ॥३

न्तीत्यर्थः । आङ्पूर्वकाद्धातेः कर्तरिल्ट् अनेन तासां रूपयौ
र्योतिता ॥ ज्योत्स्नातिमिर कलहमिति पाठे ज्योत्स्नाच तिमि
कलहं युद्धं कलहवती ज्योत्स्नातिमिरेचेत्यर्थः कृदभिहितो भ
प्रकाशत इतिन्यायात् अस्यचायमर्थः कृता कृदन्तेन अभि
सिद्धावस्थापन्नो धात्वर्थः द्रव्यवत्द्रव्य इव प्रकाशते भा
देति सप्तम्यन्ताद्वतिः । द्रव्यविशेषणतापन्नोऽपि प्रकाशत
ति । अत एव साहचर्य नियमइत्यस्य नियतं साहचर्यमित्यर्
उपमायत्र सादृश्य लक्ष्मी रुल्लस तिद्वयोरित्यत्र लक्ष्मीविशि
णमित्यर्थवर्णनञ्च संगच्छेते । शशंसयः पात्रगुणाद्गुणानां संक्र
त गुणातिरेकां । त्वगमसमये दृश्य चन्द्रोदय श्रीरित्यादिष्व
गाय इति संक्षेपः ॥ अत्र हरिद्राङ्ग रागादिषु सन्ध्यारागत्वादि
स्त्रीष्वरूपितमपि रजनीमुखत्वं गम्यत इति एकदेश विवर्तिरू
रागमित्यादि विशिष्टार्थेन नयनोत्सवाधानस्य समर्थनात्काव
॥ * ज्योत्स्नाकलहेत्यत्र पूर्वसदृशेत्यादिना तृतीयासमासः॥ * ।
काञ्चनीपीता हरिद्रावरवर्णिनीति. शिखास्वापीडशेखराविति,
ास्फुटेकलइतिचामरः, पालिकापूगकुसुमे समूहेऽश्रयङ्कयोरि
यादवः.
ाथ तेषु प्रतीच्यां श्वेताद्रिं द्रक्ष्यसीत्याह । पृथ्वीति ॥ हेज

हंस इवश्च नदीमातृकप्रवेशौत्सुक्यद्योतनाय । पृष्ठ्याः भूमे
स्तिलकमिति तादर्थ्यषष्ठीसमासः लीलार्थंचतत् तिलकं
मपदलोपीवातदिवसुभगं मनोज्ञम् । नाम्ना नामधेयेन व
कमित्यर्थः । नाम्नैव वर्षः नतुवर्षप्राचुर्येणेतिभावः प्रकृत्या
तृतीया । नदी माता पोषयित्रीयस्यतं नद्यृतश्चेतिकप् । ए
पश्चाद्भवं पश्चिमं प्रतीच्यमित्यर्थः । भागं प्रदेशं गाहमानः प्र
परिमिततया स्वल्पतया अस्यदृश्येत्यनेनान्वयः । मग्नः भूम्य
पयांशः यः कैलासः तन्नामापवर्तः स इव दृश्यः दर्शनीयः द
श्वैत्यार्थं तम् । अत एव क्षमातलात् भूमेरधःप्रदेशात् उज्जिह
न्तम् । उत्पूर्वकात् ओहाङ्गताविति धातोः कर्तरिशानच् फ
मिवस्थितं श्वेतं शैलं श्वेताद्रिमित्यर्थः आरात् समीपेद्रक्ष्यसि
ष्यसे॥ * अत्र लीलातिलकसुभगमित्यभूतोपमा । संबन्धातिः
पितोपमावा. एवं मग्नकैलासदृश्यमित्यत्रापि॥ जलचरेति विशे
मातृकप्रवेशोत्सुकत्वाभिप्रायकत्वात् परिकराङ्कुरः । गिरेः क्ष्म
ःफणिपति तादात्म्यसंभावनादुत्प्रेक्षा । यदायमुपमानांशोलो
क्षते । तदोपमैवयेनेव शब्दस्साधर्म्यवाचकः ॥ यदापुनरयंलो
कविकल्पितः । तदोत्प्रेक्षैवयेनेव शब्दस्संभावनापरः ॥ इ
त्येपः, "देशोनद्यंबुवृष्ट्यंबु संपन्नव्रीहिपालितः स्यान्नदीमातृको
श्चयथाक्रममिति । अधस्स्वरूपयोरस्त्रीतलमितिचामरः.

स्फारालोक प्रशमिततम स्सञ्चयंतत्रपुंसां
प्रत्यग्रूपं प्रगुणविभवं प्रार्थनीयंबुधानां ।
नेदीयांसं कुशलनिवहं नन्तुराधास्यतेते
दिव्यंतेजो जलधितनया स्नेहनित्यानुषक्तम् ॥ ॥३६

तत्र पुण्डरीकाक्षोदेवः प्रणमतस्तव कुशलानिकरिष्यतीत्या
। प्रत्यञ्चतीति प्रत्यक् स्वयंप्रकाशमित्यर्थः तादृशं रूपं स्वरू
कम् (यत्स्वस्मैभासते तत्प्रत्यगित्युच्यते) प्रगुणः प्रकृष्टगुणशा
श्वर्यं यस्य तथोक्तम् । यद्वा गुणानां कल्याणगुणानां विभ
सप्रकृष्टोयस्यतथोक्तम् निरतिशयानन्त कल्याणगुणमित्यर्थ
बुधानां तत्त्वविदां प्रार्थनीयं अभ्यर्थनीयम् । जलधेः समुद्र
ा पुत्री ( लक्ष्मीः ) तस्याः ( कर्त्र्याः ) स्नेहेन अनुरागेण नि
यथा तथा अनुषक्तं संबद्धम् । जलधितनया स्नेहे नित्यासक्तंव
पुंसां चेतनानां भजमानानामितिभावः ( अस्यतमस्यन्वय
विकसितेन आलोकेन कटाक्षेण प्रशमितः निरस्तः तमसां अ
ञ्चयः निवहः येन तथोक्तम् । जायमानंहिपुरुषं यं पश्येन्म
ात्विकस्सतुविज्ञेय स्सवैमोक्षार्थचिन्तकइत्युक्तेः । दिव्यं अप्रा
ोतिः परं ब्रह्मेत्यर्थः । (कर्तृ) नन्तुः प्रणमतः ते तव अस्यकुश
। नेदीयांसं अतिशयेनान्तिकस्थं कुशलानां क्षेमाणां निवहं
र्थः । क्रमेणमुक्तिपर्यन्तमित्यर्थः. आधास्यते विधास्य
रकान्तारमपारमभिधावताम् । एकः कृष्णनमस्कारोमुक्तिती
इत्याद्युक्तेरितिभावः । दीपरूपमर्थान्तरपापिविवक्षितम् । तथ
पं स्वप्रकाशरूप तस्य परप्रकाश्यत्वाभावादितिभावः । गुण

नां विभवः समृद्धिः वर्तिकारूपः स प्रकृष्टो यस्यतथोक्तम् । ज
ाया: कस्याश्चित्स्त्रियाः यः स्नेहः तैलं तेन नित्यानुषक्तं सततर
न सामग्रीपौष्कल्यमुक्तम् । अत एव पुंसां चेतनानां (अस्यत
:) स्फारैः पुष्कलैः आलोकैः प्रकाशैः प्रशमितः प्रकर्षेण नि
न्त्येभिरिति तमांसि पुंसां चाक्षुषज्ञाननिरोधित्वादितिभावः
यः निवहः येन तथोक्तम् । बुधानां ज्ञातॄणां प्रार्थनीयं दीपस्य
त्वादितिभावः । दिव्यं रमणीयं तेजः (अर्थात्) दीपरूपं ज्ये
र्तृ) नन्तुः प्रणमतस्तव नेदीयांसं कुशलनिवहं क्षेमस्तोमं आधार
पापहरोनृणां दीपश्रापन्निवारकः । दीपोविधत्ते सुकृतं दीप
यकः । देवानां तुष्टिदोदीपः पितॄणां प्रीतिदायकः । तस्माद्दीपं
गृहस्थैश्शुभमीप्सुभिरितिपौराणिकोक्तेः दीपस्य कुशलनिवहा
बोध्यम् ॥ * अत्र प्रकृताप्रकृतगोचरश्श्लेषः । भगवत्पक्षे तमर
ारकत्वस्य प्रगुणविभवत्वस्यच प्रार्थनीयतां प्रतिहेतुत्वात् क
म् । स्नेह नित्यानुषक्तत्वस्य कुशलनिवहाधानं प्रतिहेतुत्वादन्य
ङ्गम् । नन्तुरितिविशेषणस्य कुशलाधानार्हत्वाभिप्रायकत्वात्परिव
त्ते प्रगुणविभवत्व स्नेहनित्यानुषक्तत्वयोः प्रशमित तमस्सश्च
तुत्वात्काव्यलिङ्गम् । इतिसंक्षेपः ॥ * प्रत्यगित्यत्र ऋत्विग्दधृग्
अञ्चतेःक्विन् । स्फारैत्यत्र स्फायितञ्चीत्यादिनारक्प्रत्ययः । नेदीय
। अन्तिकशब्दादीयसुनि अन्तिकबाढयोरितिनेदादेशः ॥ * गुण
ाब्दादि ज्येन्द्रियामुख्यतन्तुष्वितिरत्नमाला । स्नेहस्स्यात्पुंसितैलादि
सौहृदे इतिमेदिनी । आलोकौ दर्शनोद्योतावित्यमरः. (२

स्निग्धच्छायं तदनुविततं तस्यधामेवनीलं
नीलीरक्षा नियतललितं काननंसंविचीयाः ।
दृष्टेतस्मि न्ननिमिषवधू नित्यनिर्वेशयोग्ये
स्वर्गोद्यान श्रियमपिलघुं मंस्यतेमानसंते ॥　　　　　　॥४०॥

---

ातिमनोहरं नीलीवनं पश्येरित्याह । स्निग्धेति ॥ तदनुपुण्डरी
ानन्तरं स्निग्धामनोज्ञा छाया अनातपः यस्यतथोक्तम्. विततं
य पुण्डरीकाक्षस्य धामरोचिरिव तद्विग्रहरोचिरिवेत्यर्थः त्विग्र
नीलं श्यामलं अनेन वनस्य आदरणीयत्वं द्योतितम् । नील्या
ाक्षस्याः (कर्त्र्या) रक्षया पालनेन नियतं नियमयुक्तं यथातथा
ोहरम् अत्र नीली नामराक्षसी तद्वनं गोपायतीति कथानुस
तएव श्रीरङ्गमाहात्म्ये. ततउत्तरतः पश्चान्नीलीवनमितिश्रुत
। नीलीरक्षेत्यादिपाठस्यैव प्राचीनकोशेषुदर्शनात् नीलीपुष्प
ातमितिपाठान्तरं कल्पितमितिबोध्यम् । काननं वनं संविचीयाः
वेषीष्टाइत्यर्थः संविपूर्वात् चिञ् चयनेइत्यस्माद्धात्वादिकात् कर्त
लिङ् । तदेवविशिनष्टि । ननिमिषन्तीत्यनिमिषाः देवाः तेषां
ालनाः तासां नित्यं सर्वदा निर्वेशस्य उपभोगस्य योग्ये अर्हे.
गीयकातिशयस्सूचितः । तस्मिन् पूर्वोक्ते कानने दृष्टे अवलो
उपभुक्तेतु किमु वक्तव्यमितिभावः । ते तव स्वर्गोद्यानविहा
र: मानसं चेतः (कर्तृ) स्वर्गस्य नाकस्य उद्यानं आक्रीडः
शोभामपि किमुत भूम्युद्यानश्रियमितिभावः । लघुं अल्पां मंस्यते
ज्ञाने कर्तरिलृट् ॥ * अत्र तस्यधामेव नीलमित्यत्र उपमा ।
श्रयोपि लघुत्वेन ज्ञानं प्रतिविशिष्ट वनदर्शनस्य हेतुत्वात्काव्य

कुर्वन्नाना कुसुमरजसा यत्रचित्रंवितानं
पूगारण्ये मृदुविचलय न्पालिकाचामराणि ।
पादन्यास क्षममवकिरन् क्ष्मातलंपुष्पजालैः
प्रायोवायुः परिजनविधिं पञ्चबाणस्यधत्ते ॥ ।

---

न् ॥ *लघुमित्यत्र वोतोगुणवचनादिति विकल्पेनङीषभावः॥
दप्रभावा धामानीत्युभयत्राप्यमरः पुमानाक्रीडउद्यानं राज्ञ
नमित्यमरः । त्रिष्विष्टेल्पेलघुरित्यमरः.
वनं वर्णयति । कुर्वन्निति॥ यत्र वने नानाकुसुमानां अने
णां रजसा परागेणेत्यर्थः नानावर्णेनेतिभावः । चित्रं शब
ं उल्लोचं कुर्वन् रचयन् पूगानां क्रमुकवृक्षाणां अरण्ये वने
र्गते पूगारण्यइत्यर्थः पालिकाः क्रमुककुसुमान्येव चामराणि
ने. मृदुमन्दं यथा तथा विचलयन् कम्पयन् (चलकम्पनेज्वल
ां अनेककुसुमानां जालैः निचयैः क्ष्मातलं वनभूप्रदेशं. पा
णोः न्यासस्य विन्यसनस्य क्षमं योग्यं अवकिरन् परिक्षिपन्
कर्कशं नभवति तथाविकिरन्नित्यर्थः । वायुः मन्दानिलः. पञ्च
न्दमशोकञ्च चूतंचनवमल्लिका । नीलोत्पलञ्चेत्युक्तः यस्य
स्येत्यर्थः । परिजनस्य सेवकस्य विधिं कृत्यं प्रायोधत्ते वित
युत्प्रेक्षाव्यञ्जकः। मन्ये शङ्के ध्रुवं प्रायोनूनमित्येवमादिभिः। उ
ते शब्दौ रिवशब्दोपि तादृशइत्युक्तेः॥ *अत्र प्रायोधत्तइति
त्प्रेक्षा । साच पूर्वोक्त रूपकोत्थापिता । मन्मथे अरूपित
जत्वं गम्यतइति रूपकमेकदेशविवर्ति । पञ्चबाणस्येति विशे
बाणस्थानेपि कुसुमं कृतवानिति पराक्रमातिशयाभिप्रायक

स्रोतोवेगा दथजनपदं सौम्यसीमन्तयन्ती
प्रत्यादेशो विबुधसरित स्स्पन्दतेसह्यकन्या ।
कालेकाले परिणतिवशा त्पर्वभेदावकीर्णैः
पुण्ड्रेक्षूणां पुळिनविशदै र्गद्गदामौक्तिकौघैः ॥ ॥१

---

ार्याभिप्रायकतया वा परिकराङ्कुरइतिसंक्षेपः॥ * चित्रकिम्मीरक
ठेताश्च कर्बुरइति अस्त्रीवितानमुल्लोचइतिचामरः । क्षमाचो
ायां योग्यशक्तहितेषुतु । त्रिष्वितिरत्नमाला. (
थ श्लोकद्वयेन तत्समीपे प्रवहन्तीं कावेरीं वर्णयति । स्रोत
थ अथ अनन्तरं स्रोतसः प्रवाहस्य वेगात् जवात् जनपदं
ीमन्तयन्ती सीमन्तवन्तं केशवेशवन्तं कुर्वती पार्श्वद्वयस्य श्र
श्यामळत्वादितिभावः विबुधानां देवानां सरितः नद्याःगङ्
: प्रत्यादेशः निराकृतिः निराकृतिहेतुरित्यर्थः गङ्गातउत्कृष्टेति
ाले तत्तत्कालेष्वित्यर्थः परिणतेः परिपाकस्यवशात् अधीन
इतीक्षवः रसालास्तेषां पर्वणां ग्रन्थीनां भेदात् विदळना
र्णैः विक्षिप्तैः पुळिनानि तोयोत्थितसैकतद्वीपानीव विशदैःस्व
ुव मौक्तिकानि तेषां ओघैः बृन्दैः गद्गदा निम्नोन्नता सह्यस्य
र पर्वतस्य कन्या कुमारिका कावेरीत्यर्थः स्यन्दते प्रस्रवति
र्थः स्यन्दूप्रस्रवणे इत्यस्माद्धातोः कर्तरिलट् तां द्रक्ष्यसीति
स्यान्वयानुरोधात्॥ अत्रेदं बोध्यम् मङ्गळानन्तरारंभ प्रश्नका
अथेत्यादि कोशेषु देशकाल साधारण स्यानन्तरशब्दस्यैवो
कालस्येव देशस्याप्यनन्तरस्य अथ शब्दार्थत्वे बाधकादर्शनेन
शब्दस्य देशानन्तर्यपरत्वमेवयुज्यते । अथ स्यन्दत इत्यन्व

म् । परन्तु आचार्याणामीदृशेन प्रयोगेणास्य प्रामाणिकत्वम
र्यप्रयोगान्तरन्त्वन्वेषणीयमिति॥ यद्यपि रत्नशास्त्रे करिदन्ते बल
ाठे पुण्ड्रेक्षुपर्वस्विति मौक्तिकोत्पत्तिमुक्त्वा करिदन्तोद्भवं पीत
ेक्षुसंभवमिति तस्यापि पीतत्वमेवोक्तं । तथापि करिदन्तोद्भवा
ापि श्वैत्यप्रधानत्वाद्वा मौक्तिकं श्वेतं इतिकविसमयवशाद्वा पुळिन
युक्तम् । यद्वा पुळिनेषु तोयोत्थितद्वीपेषु विशदैः व्यक्तैरित्यर्थः
मानैरितियावत् अतएव विशदः पाण्डरे व्यक्तइतिमेदिनी
ळे व्यक्ते शुचौ त्रिषुगुणेतुना इतिरत्नमालाचेतिबोध्यम्॥ * अत्र
ा विबुधसरितइत्यत्र श्रीभगवानुवाच मत्संबन्धेनत्वं तस्याम
ावार्यते । तथापि मत्प्रसादेन गङ्गाया अधिका सीकरगम्य नि
ेष्यामि त्वन्मध्येसरितांवरे । गङ्गाया अधिकाभूया नित्ययोग
त्यादि श्रीरङ्गमाहात्म्यकथानुसन्धेया॥ * अत्रसमृद्धिमद्वस्तुवर्ण
। प्रत्यादेशहेतोः कावेर्याः प्रत्यादेशेनैक्यवर्णनाद्धेत्वलङ्कारश्च
ैक्यं हेतुंकेचित्प्रचक्षतइत्युक्तेः । जनपदं सीमन्तयन्तीत्यनेन
पदस्य भूदेव्युत्तमाङ्गस्थानीयत्व प्रतीतेर्देशान्तरेभ्योस्योत्कर्षः प्र
ासंक्षेपः॥ * सीमन्तयन्तीत्यत्रसीम्नोः अन्तोमध्यभागः सीमन्तः
तिसीमन्तवान् । सीमन्तवच्छब्दात्तत्करोतीतिणिजन्ताच्छतरिङी
। कालेकालइत्यत्र नित्यवीप्सयोरिति वीप्सायांद्विर्भावः । मै
विनयादित्वात्स्वार्थेठक् क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवच
र्तन्त इतिक्लीबता॥ * सीमन्तमस्त्रियां स्त्रीणांकेशमध्यमुदाहृता
र्णवः । अन्तोस्त्रीनिश्चयेनाशे स्वरूपेप्रान्तिकेन्तरे इतिरत्नमाला ।
र्द त्रिष्वितिविश्वः । स्रोतोम्बुसरणंस्वतइति, रसाल इक्षुस्तद्भेदा

ोत्सङ्गा त्सपदिमरुता सागरंनीयमानां
ालापै र्विहितकुशलां त्वादृशानांद्विजानाम् ।
नस्कन्ना स्सरसकुहळी पत्रपातैर्निशान्ते
ृस्मेरां मधुपरिमलै र्वासयन्तीवपूगाः ॥ ॥४३॥

इति, ग्रन्थिर्नापर्वपरुषीइति, ओघोवृन्देम्भसांरयइति, कवेर सह्ययोनिर्मरुद्वृधेतिचामरः. (४२)

ळोकोक्तं कावेर्यास्सह्यकन्यात्वमेवप्रपञ्चयति ॥ सह्येति ॥ त्सङ्गात् अधित्यकाप्रदेशात् अन्यत्र अङ्कात् । सपदि सद्यः न सागरं समुद्रं नीयमानां प्राप्यमाणां भ्रात्रादिनासजनेन ानामितिचव्यज्यते त्वादृशानां भवादृशानां द्विजानां मङ्गळकरैः आलापैः ध्वनिभिरित्यर्थः विहितं विरचितं नां) क्षेमं यया तथाविधाम् । दर्शनं तार्क्ष्यचक्राङ्क्याग्राट ् । प्रस्थानेशुभदंनृणां विरुतन्तुविशेषतइत्युक्त्या, शुभनि सम्बन्धि पक्षिविरुतैः आहितजनक्षेमामित्यर्थः । अन्यत्र ाणानां आलापैः आभाषणैः विहितं कुशलं यस्यास्तां, नेन कृतक्षेमामित्यर्थः । सरसानि समधूनि कुहळीनां पूग ाणि दळानि सरसेति कुहळीविशेषणंवा, तेषां पातैः पतनैः था स्मेरां विशदामित्यर्थः अन्यत्र स्मयमानाञ्च । यांसह्य पाः रात्रेः अन्ते अवसाने उषसीत्यर्थः । अन्यत्र गृहे स्वेस्वे नस्कन्नाः अशुष्काः आर्द्राइतियावत् प्रेमार्द्राइतिचव्यज्यते। वृक्षाः बन्धुसमूहाइतिचव्यज्यते । मधूनां मकरन्दानां परि विशेषैः परिमळवद्भिर्मधुभिरित्यर्थः कावेर्यानिपातितैरिति

10

तस्मिन्द्रक्ष्य स्यमरमहिळा मौळिगन्धैरवन्ध्या
मातन्वानां व्यपगतरसं मानसेमानसंवः ।
तीर्थैरन्यै रपिपरिगतां शुद्धिहेतोस्समन्ता
च्चन्द्रोल्लास प्रथितयशस स्संपदंपुष्करिण्या:॥

---

भाव:, परिमळद्रव्यैरितिचव्यज्यते, वासयन्ति सुरभयन्तीवेत्यर्थः कन्यास्यन्दते इतिपूर्वेणान्वयः ॥ * अत्र कावेरीवृत्तान्ते वर्ण्यमाने :सगात् भ्रात्रादिना भर्तारं नीयमानायाः. ब्राह्मणकृतस्वस्त्य स्मयमानायाः नवोढायाः वृत्तान्त प्रतीयतइतिसमासोक्तिः । :याप्यमाना पूगानां वासयितृत्वोत्प्रेक्षा पूगेषु बन्धुव्यवहार सम तमासोक्ति गर्भेवोत्थाप्यतइति तस्याश्चतयोश्चाङ्गाङ्गिभावसङ्करः :योरुत्प्रेक्षा समासोक्त्योरपि समप्राधान्यसङ्करइतिदिक् ॥ * अ :व्ये पापपुण्यसुखादिच इतिकोशात् भद्रशब्दस्यवाच्यलिङ्गता गाइत्यत्रस्कन्दिर्गतिशोषणयोरित्यस्मात्कर्तरिक्तः ॥ * दन्ताविप्र द्विजाइति. स्यादाभाषणमालापइति. पूगःक्रमुकबृन्दयोरिति ासितं त्रिष्वितिचामरः । पालिकाकुहळी चापिपूगस्य कुसुमेस्त्रि ।वरटुकाः। निशान्तं त्रिषुशान्तेस्यात् क्लीबन्तुभवनोषसोरितिमेदिनी

अथ तत्र चन्द्रपुष्करिणीं द्रक्ष्यसीत्याह ॥ तस्मिन्निति॥ तस्मि दे अमराणां देवानां महिळाः ललनाः तासां मौळयः धम्मिल्ला न्धैः सौरभैः अवन्ध्यां अशून्यां गर्भवतीमित्यर्थः तासां तत्र स् तभावः । वः युष्माकं त्वादृशानामित्यर्थः मानसं चेतः (कर्म) ालासपर्वते राममनसानिर्मितं सरः । ब्रह्मणा नरशार्दूलतेनेदं मा त्युक्ते तन्नाम्निसरसिव्यपगतः विशेषेण अपयातः रसः अनुराग

व्यपगतेति कर्तरिक्तप्रत्ययेन रसस्स्वयमेव गळतीति०पद्यते।
नां कुर्वाणां शुद्धिः शुचितैव हेतुः हेतुरत्रफलं तस्य षष्ठीहेतुप्र
षष्ठी स्वस्वशुद्ध्यर्थमित्यर्थः। अन्यैः इतरैः तीर्थैः ऋषिजुष्टजलैः
: परितः परिगतां परीतां अष्टतीर्थसमोपेतां अष्टवृक्षोपशोभितां।
वेष्णुना पुण्यां चन्द्रपुष्करणीं शुभामित्युक्तेरितिभावः चन्द्रस्य
उल्लासेन आप्यायनेन राजयक्ष्मनिराकरणादितिभावः प्रथित
यशः कीर्तिः यस्याः तथोक्तायाः पुष्कराणि कमलानि अस्यां
पुष्करिणी जलाशयविशेषः तस्याः चन्द्रपुष्करिण्याइत्यर्थः।
मृद्धिं संपद्युक्तां पुष्करिणीमित्यर्थः द्रक्ष्यसि आलोकिष्यसे।
हंसमनसः मानससरसिवैरस्या संबन्धेपि तत्संबन्धोक्ते रतिशये
समृद्धिमद्वस्तुवर्णनादुदात्तश्च ॥ * चन्द्रोल्लासेत्यत्रपुराकिलचन्द्रे
र्त्रीरूपयम्य तासुरोहिण्यामेवासक्ते अन्याः तमिमं चन्द्रव्यति
। निवेदयामासुः तेनापिसप्तविंशतौ भार्यास्वेकस्यामेवतवसक्ति
तत्साम्यमावहेत्युक्तोपि पूर्ववदेवप्रववृते ततोस्य विषमाचारकुपि
ण क्षयार्तो भवेतिशप्तः हतप्रभः कृशगात्रोबभूव ततश्चन्द्रपुष्क
प्य सुमहत्तपस्तेपे स्नात्वाच तत्र विकसद्भिः अम्भोजैःदेवं श्री
पूजयामास ततः प्रसन्नेन तेनानुगृहीतः प्रक्षीणक्षयः परां पुष्टिं
ात्तस्या श्चन्द्रपुष्करिणीतिख्यातिरासीदिति गारुडपुराणीयाकथ
ा ॥ * शृङ्गारादौविषे वीर्ये गुणे रागे द्रवे रसइत्यमरः । अथ
चेभ्यां सरोजिन्यां जलाशयइतिमेदिनी. (४६

तीरेतस्या विरचितपदं साधुभिस्सेव्यमानं
श्रद्धायोगा द्विनमिततनु श्शेषपीठंभजेथाः ।
यस्मिन्नस्म त्कुलधनतया सौम्यसाकेतभाजः
स्थानंभाव्यं मुनिभिरुदितं श्रीमतोरङ्गधाम्नः ॥

---

अथ चन्द्रपुष्करिणीतीरे श्रीरङ्गविमानस्य भाविस्थानभूतं सेवेथाइत्याह । तीरइति॥ हे सौम्यतस्याः चन्द्रपुष्करिण्याः विरचितं कृतं पदं स्थानं येनतथोक्तम् । साधुभिः मुनिभिः आश्रीयमाणम् । तदुक्तं धर्मवर्माणं राजानं प्रतिमुनिभिः । इत्य श्श्रुत्वा निवृत्तास्स्मोवयंनृप । तदाप्रभृतिवासोत्र गृहीतोस्माभिरेव दाशरथीरामः रावणश्चहनिष्यति । निर्भयाश्चभविष्यामो वयंराज रङ्गविमानमादाय राक्षसेन्द्रोविभीषणः । आगमिष्यतिराजेन्द्र भिरीरितमित्यादि॥ शेषपीठमनन्तासनम् । तदप्युक्तं । ददौवि सौप्रियाय प्रियकारिणे । शास्त्रोपदेशपूर्वन्तु विमानंदिव्यलक्षण तच्छिरसागृह्य ययौदेशंस्वकंप्रतिं । स्वौमध्यन्दिनंप्राप्ते कावेर चन्द्रपुष्करिणीतीरेऽनन्तपीठेऽवतारयत् इति॥ श्रद्धायाः आ योगात् संबन्धात् । विनमिता विनम्रिता तनुः मूर्त्तिः येनत अश्रद्धया हुतं दत्तं तपस्तप्तं कृतश्चयत् । असदित्युच्यते पार्थ नोइहेतिगीतोक्तेः। भजेथाः सेवेथाः । भजतेः कर्तरिलिङ्॥ अ वायस्स्यादितिभावः । अतएवोच्यते । पश्यन्तो भगवद्बिंबं धा च्छद्म् । अकृत्वातत्प्रणामादि येयान्तिपुरुषाधमाः । जात्यन्ध न्ति अङ्गहीनापरिग्रहाइति । शेषपीठमेवविशिनष्टि । यस्मिन् अस्यचस्थानमित्यनेनान्वयः । असमाकं इक्ष्वाकूणां कुलस्य व

सत्वेदिव्ये स्वयमुदयत स्तस्यधाम्नःप्रसङ्गा
न्मन्जूषायां मरकतमिव भ्राजमानंतदन्तः।
चेतोधाव त्युपहितभुजं शेषभोगेशयानं
दीर्घापाङ्गं जलधितनया जीवितंदेवमाद्यम् ॥४६

त्वेनेत्यर्थः अनेन महनीयत्वं व्यज्यते साकेतं अयोध्यां
भूतस्य इदानीं अयोध्यायां वर्तमानस्येत्यर्थः अनेन इक्ष्वाकु
ात्मनोभ्यधिकंतदा। श्रीमद्रङ्गमहद्धामेत्याद्युक्तं ज्ञापितं श्रीम
सतयासमृद्धियुक्तस्येत्यर्थः । रङ्गमितिधामगृहं रङ्गविमान
ाभाव्यं भविष्यत् स्थानं स्थितिः (कर्म) भावेल्युट् मुनिं
(कर्तृभिः) उदितं उक्तं तच्छेषपीठमितिपूर्वेणान्वयः । भा
विशब्दात् चातुर्वर्ण्यादित्वात् स्वार्थेष्यञ्. । अत्र उत्तरा
ेषपीठस्य भजनीयतायाः समर्थनात् काव्यलिङ्गम् । श्रीरङ्
ः शेषपीठाङ्कतयावर्णनादुदात्तश्च ॥ स्यात्साकेतमयोध्या
स्थितौ स्थानमितिचामरः. (४

ीरङ्गविमानप्रसङ्गेन अयोध्यायामिदानीं तदन्तश्शयानं :
मीत्याह। सत्वइति॥ दिव्ये दिविभवे । शुद्धइत्यर्थः - रजस्
इतियावत्. सत्वे सत्वमये नित्यविभूति प्रदेशइत्यर्थः । स्व
तः आविर्भवतः अत्र वर्तमानप्रत्ययोपादानात् विमानस्य
तत्तदवसरेष्वाविर्भावस्सूचितः । इट किट कटीगताावि
ातोश्शता । अनन्तशक्तियुक्तन्तत् विमानंहि स्वयंभवि
यपूर्वोक्तस्य धाम्नः श्रीरङ्गविमानस्य प्रसङ्गात् प्रसक्तेः तद
न्तः अभ्यन्तरे इतिषष्ठीसमासः । पूरणगुणेत्यादौ अव्यय

चोराक्रान्तं तदनुविपिनं चोळपाण्ड्यान्तरस्थं
झिल्लीनाद श्रवणपरुषं शीघ्रमेवत्यतीयाः ।
तीर्णोतस्मि न्प्रकटयसखे शीतलांस्तेनिनादान्
शब्दायन्ते नखलुकवय स्सन्निधौदुर्जनानाम् ॥

---

षष्ठीसमासनिषेधः कृदव्ययविषयः अत एवतदुपरीत्यादिः ः
च्छते । मञ्जूषायां पेटायां । मरकतं गारुत्मतं रत्नमिव भ्राजम
मानं उपहितः उपधानीकृतः भुजः बाहुः यस्मिन्कर्मणि तद
उपपूर्वकाद्धधातेः कर्मणिक्तः । शेषस्य अनन्तस्य भोगे शरी
शयनं कुर्वाणं निद्राणंवा । दीर्घौ आयतौ अपाङ्गौ नेत्रान्तौ य
जलधेः समुद्रस्य तनयायाः पुत्र्याः लक्ष्म्याः जीवितं प्राणं ः
मित्यर्थः । जलधितनया लक्ष्मीः जीवितं यस्येतिवा तं आद्यं
दिगादित्वाद्यत् देवं वासुदेवमित्यर्थः कावेरीविरजासेयं वैकु
रम् । सवासुदेवोरङ्गेशः प्रत्यक्षंपरमंपदमित्युक्तेः चेतः (
धावति त्वरितं गच्छति । स्मरतीतियावत् । धावुगतावित्यस्मा
अत्र मञ्जूषायां मरकतमिवेत्यत्रोपमा । जलधितनया जीवितमि
देव धावतीति स्मरणस्य भङ्ग्यन्तरेणोक्त्यापर्यायोक्तम् ॥
प्रभावाधामानीति पिटकः पेटकः पेटामञ्जूषाइति उपधान
भोगस्सुखेस्त्र्यादि भृतावहेश्च फणाकाययोरितिचामरः.

अथ चोळपाण्ड्यदेशयोर्मध्यवर्त्यरण्यं मूकीभूयत्वरित
त्याह । चोरेति ॥ हंसखे इदंचकुशलाशंसया । तदनु शेषपं
चोरैः दस्युभिः आक्रान्तं व्याप्तं झिल्लीनां चीरिकाख्य जन्तु
नादैः ध्वनिभिः श्रवणयोः श्रोत्रयोः परुषं निष्ठुरं चोळानां

स्रस्तापीडं प्रचलदलकं व्यक्तताटङ्करत्नं
मुक्ताचूर्णं स्फुरिततिलकं वक्त्रमुत्तानयन्त्यः ।
देशेतस्मि न्कुवलयदृशो जातकौतूहलास्त्वाम्
मालादीर्घै र्मधुरविरुतं मानयिष्यन्त्यपाङ्गैः ॥ ॥४८

---

ठाः पाण्डूनां जनपदानां राजानः पाण्ड्याः पाण्डोड्यणि
त्र राजवाचकस्यदेशे औपचारिकः प्रयोगः । चोळाश्चपाण्ड
न्तरेमध्येतिष्ठतीति तथाभूतं विपिनं अरण्यं शीघ्रं त्वरितमेव
ाल्पोपि विळम्बोनकार्यइतिद्योतितम् । व्यतीयाः व्यतिव
रलिङ् । तस्मिन् विपिने तीर्णे अतिक्रान्तेसति । शीतळा
दान् ते तव निनादान् शब्दान् प्रकटय प्रकाशय । तथा
 खलानां सन्निधौ सविधे । कवयः उत्तमकाव्यकर्तारः ज
गश्च नशब्दायन्ते शब्दं नकुर्वन्तिखलु । शब्दवैरेत्यादिना क
ङ्॥ * अत्र चोराक्रान्तामित्यादेः शीघ्रव्यतिवर्तनहेतुत्वात्का
। शब्दायन्त इत्यादि सामान्येन विशेषसमर्थनादर्थान्तरन्या
शब्दवाच्यार्थद्वयश्लेष भित्तिकाभेदा ध्यवसायमूलकातिशयोक
इतिसङ्करः ॥ * भृङ्गारी चीरिकाचीरी झिल्लिकाचसमाः
(४

मधुरनिनादान् प्रकटयन्तं त्वां तत्रत्याः कुवलयदृशः द्रक्ष्यन
त्रस्तेति॥ तस्मिन् पाण्ड्यदेशे कुवलये उत्पलेइव दृशौयासान्त
। जातं उत्पन्नं कौतूहलं कुतुकं यासु तथाभूतास्सत्यः । त्र
: विगळितः आपीडः शेखरः शिखाधृतमाल्यमितिया
कर्माणि तद्यथातथा । प्रचलन्तः व्याकीर्णाः अलकाः चूर्ण

न्तळाः यस्मिन्कर्मणि तद्यथातथा व्यक्तानिप्रकाशंगता
कर्णाभरणविशेषाणां रत्नानिमणयः यस्मिन्कर्मणि तद्यथा
मौक्तिकानां चूर्णः क्षोदः चूर्णमयमितियावत्. स्फुरितं
चितिलकं यस्मिन्कर्मणि तद्यथातथा । स्फुरितमुक्ताचूर्णतिल
त्यर्थः । यद्वास्फुरितः मुक्ताचूर्णः यस्मिन्तत् मुक्ताचूर्ण
तिलकं यस्मिन्कर्मणीत्यर्थः । जातिकालसुखादिभ्यः प
स्फुरितशब्दस्य परनिपातः । सर्वमिदमुत्ताननक्रियाविशे
वदनं उत्तानयन्त्यः उन्नमयन्त्यः । उत्तानशब्दात् तत्क
च्छंतरिङीप् । माला: कुवलयदामानीवदीर्घाः दूरविसर्पिण
कटाक्षवीक्षणैरित्यर्थः मधुरं श्रोत्रसुखं विरुतं ध्वनिः यस्य
मानयिष्यन्ति पूजयिष्यन्ति । मानपूजायां कर्तरिऌट् ।
नृणां श्लाघावापिचतद्विदाम् । तत्र प्रकाशयेद्धीमान् उद
इत्युक्तेः तत्रावश्यं शीतळान्निनादान् प्रकटयेरितिभावः
रित्यनेन सोत्सुकतरङ्गितदृष्टीउक्ते । तदुक्तं भावप्रकाशे.
लोकय भूयो भूयो विलोकनम् । कल्लोलइवयः कान्तिवि
मिति ॥ * अत्र कुवलयदृशइति विशेष्यस्य कटाक्षवीक्ष
माला तुल्यत्वाभिप्रायकतया परिकराङ्कुरः । विशेषणमात्र
ष्यप्रतिपत्तावितिवामनोक्तेः कुवलयदृशइत्यस्यैव विश
मालादीर्घैरित्युपमागर्भविशेषणस्य अपाङ्गानाम्माननोपका
तयापरिकरः मधुरविरुतत्वस्य जातकौतूहलत्वं प्रतितस्य
प्रतिहेतुत्वा त्काव्यलिङ्गद्वयम् स्वभावोक्तिश्चेतिसंक्षेपः ।
पीडशेखरावित्यमरः । ताटंकः कर्णदर्पण इतित्रिकाण्डशे

नित्यावासं वृषभमचलं सुन्दराख्यस्यविष्णोः
प्रत्यासीद न्सपदिविनम द्भागधेयंनतस्स्याः ।
यस्योत्सङ्गे बलिविजयिन स्तस्यमञ्जीरवान्तं
पाथोदिव्यं पशुपतिजटा स्पर्शशून्यंविभाति ॥ ॥४६॥

न्दरबाहोर्भगवतः स्थानभूतं वृषभाद्रिं प्रणमेरित्याह नित्येति॥
ख्यानामयस्य तथोक्तस्य सुन्दरबाहोरेव सुन्दरइतिनामान्तरम्,
त्साङ्कमिश्रैः तं वन्देसुन्दराख्यमिति । वन्देयसुन्दरभुजमितिच॥
ोतीति विष्णुः नारायणः ( विषॢव्याप्तौ ) तस्य इदञ्च इदं
क्रम इत्यादिश्रुतेः ज्ञापकं तेन गङ्गाप्रभवमञ्जीरत्वं व्यञ्जितम् ।
ैरतः य आवासः स्थानं तं । विनमतां नमस्कुर्वतां भागधेयं
भागरूपेत्यादिना स्वार्थिकोधेयप्रत्ययः वृषभं तन्नामकं अचलं
सीदन् प्राप्नुवन्सन् तस्य प्रत्यासन्नोभवन् सन्नित्यर्थः । सपदि
नतः प्रह्वीभूतः स्याःभवेः । दर्शनादेव भगवद्धामानिप्रणमेन्न
रितिभावः । नमस्कारेहेत्वन्तरमपिदर्शयन् तमेवविशिनष्टि । यस्य
स्य उत्सङ्गे ऊर्ध्वप्रदेशे अस्यविभातीत्यनेनान्वयः । बलिविज
चनिनिग्रहीतुः तस्यविष्णोः त्रिविक्रमस्येत्यर्थः मञ्जीरेण नूपु
विकीर्णमित्यर्थः । नायमश्लीलः। प्रत्युतातिशयेन सुन्दरोपि
ोर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यव
ाहतइत्युक्तेः । दिव्यं दिविभवं पाथः जलं गङ्गारूपमितिभावः
अत्र ऊर्ध्वोत्क्षिप्तस्य त्रिविक्रमचरणस्य ब्रह्मणाऽवनेजनावसे
नेन्नोत्पत्यच्युतं किञ्चित् सलिलं वृषभाचलं गतं नूपुरगङ्गेत्या
ा पौराणिकीकथानुसन्धेया ॥ पशुपतेः शिवस्य जटानां सटान

ईशादस्त्रा ण्यधिगतवतां क्षत्रियाणांप्रभावा
त्कारावास स्मरणचकितै रिसक्तसस्यान्पयोदैः।
पश्यन्यायाः परमलकया स्पर्धमानैरजस्रं
पुण्यावासैः पुरजनपदै र्मण्डितान्पाण्ड्यदेशान्॥ ॥५०॥

---

बन्धेन । शून्यं विरहितं हीनमित्यपिपाठः विभाति विशेषेण
गाङ्गमपिभात्येव । इदन्तु विशेषेण भातीतिभावः। अयमाशयः
गङ्गामपिहर जटासारइतियेनमज्जन्त्यंभोधौ लवणरसवेशन्तक
ोत्या शिवजटासारत्वेन स्नानाद्यनर्हमिति केषाञ्चिद्वचनीयमपि
ादस्ति अप्राप्यैव शिवशीर्षं वृषभाद्रावतीर्णत्वादिति ॥ अत
ानुसारिभिः आचार्यैः, सवित्रीमुक्तानां सकलजगदेनः प्रशम
भिस्तीर्थै रुपचितरसायामुनमुखैः । दुरुच्छेदानिम्नेतरमपिसम
मां यदृच्छाविक्षेपाद्यतिपति दयादिव्यतटिनीत्यादिक मुक्तमिति
। अत्र विष्णोरितिर्विशेष्यस्य बलिविजयिन इतिविशेषणस्यच
त्वाभिप्रायकतया परिकराङ्कुरपरिकरौ ॥ विनमद्भागधेयमितिख
नित्यावासत्व विनमद्भागधेयत्व विभातत्वानां नमनं प्रतिहेतुत्व
ङ्गम् । दिव्यंपाथस्साक्षान्निपतितमितिवक्तव्ये पशुपतिजटेत्यादि
ग कथनात् पर्यायोक्तम् ॥ श्लाघ्यस्य नूपुरगङ्गाचरितस्यान्याप
ादुदात्तश्चेतिसंक्षेपः ॥ * पादाङ्गदन्तुलाकोटिर्मञ्जीरो नूपुं
त्यमरः.

(४६

ुसमृद्धान् पाण्ड्यदेशान् पश्यन् गच्छेरित्याह ईशादिति
भोः अस्त्राणि आग्नेयादीनि अधिगतवतां प्राप्तवतां तपश्चर्यैः
। क्षत्रियाणां राजन्यानां अत्र कस्यचिदेव ईशादधिगतास्त्र

हुवचनं छत्रिन्यायेनेतिबोध्यम् । प्रभावात् तेजोविशेषात् हेतो
त्यनेन अन्वेति । कारायां बन्धनालयेवासस्य स्थितेः स्मरणा
केतैः भीतैः पयोददतीतिपयोदाः तैः मेघैः सिक्तानि सेच
ः सस्यानि येषुतान् अत्र सस्यपदं तद्धेतुवृक्षादिपरंबोध्यम्। वृक्ष
तं सस्यमिति तत्फलस्यैव सस्यत्वानुशासनात् क्षेत्रगतं धान्य
न्ये । यद्वासस्यानामपिसिक्तत्वे कैमुतिकन्यायेन वृक्षादीनामा
क्तत्वं सिध्यतीतिबोध्यम् । अनेन धान्यसमृद्धिरुक्ता. धनस
इपरमिति । अलकया कुबेरनगर्या अजस्रं सन्ततं पयातया
मानैः संघर्षमारचयद्भिः । पुण्यानां यज्ञदानादिसाध्यधर्मा
स्थानभूतैः । यद्वापुण्यानां पुण्यपुरुषाणां ज्ञानानुष्ठानशालि
। पुराणि नगराणिच जनपदाः नीवृतश्चतैः मण्डितान् अन्
ण्डूनां जनपदाना राजानः पाण्ड्याः तेषां देशान् विपर
विलोकयन् यायाः गच्छेः । नतुदर्शनार्थं स्यातव्यमितिभाव
चकितैरित्यस्य सेचनं प्रतिहेतुत्वात्काव्यलिङ्गम् । अलकया
युपमा । स्पर्धतेहयतिद्वेष्टीति स्पर्धतेरपि उपमाबोधकेषु पठि
समृद्धिमद्वस्तुवर्णनादुदात्तश्च ॥ * सप्रतापः प्रभावश्चयत्तेजः
इजमित्यमरः॥ स्याद्धर्ममस्त्रियां पुण्यश्रेयसीसुकृतंवृषइति अप
ापपुण्यसुखादिकेचेतिचामरः ॥ * ईशादस्त्राणीत्यत्र पुराचेरचे
धीशेषु अवग्रहनिग्रहाय इन्द्रं अभ्यर्थयितुं गतेषु तत्रचेरचोळे
मुन्नत मासनमास्थितयोः स्वार्थं नीचमासनमुपेक्ष्येन्द्रासनमे
पाण्डये साभ्यसूयइन्द्रः प्रार्थितवतोश्चेरचोळयोः जनपदेषु
नादिश्य कोपादप्रार्थितवतः पाण्ड्यस्यनादिदेश । ततः स्व

मुक्ताजालै र्जनितपुळिनां शुक्तिसन्तानमुक्तैः
तारापूर्णां दिवमिवतत स्ताम्रपर्णीं भजेथाः ।
प्रत्यासत्त्या नियतविशदं पीतसिन्धोर्महर्षेः
पानीयन्ते परिणमयिता तत्रमुक्तामयत्वम् ॥

रचोळदेशयोः महतीवृष्टिरासीत् । पाण्ड्यदेशेतु अन
लज्जितः पाण्ड्यः कदाचित् मृगयार्थं मलयं प्राप्य तः
लाद्या न्मेघपतीन् दृष्ट्वा बलाद्गृहीत्वा सद्यः कारायांतां
महेश प्रसादप्राप्तदिव्यास्त्रः पाण्ड्यः युद्धायागतं इन्द्रं
नयामहेशं यथाकालवर्षे प्रतिभुवं कृत्वा मेघान्मुमोच । तव
देशे सुवृष्टि स्सुभिक्षंच्च अभूतामिति हालास्य माहात्म्य कथ

अथ ताम्रपर्णीं सेवेथाइत्याह । मुक्तेति॥ ततः गमन
मुक्तास्फोटानां सन्तानेन सन्तत्या परंपरयेत्यर्थः । मुक्ते
णिक्तः । मुक्तानां मौक्तिकानां जालैः निवहैः जनितां
पुळिनानि तोयोत्थितद्वीपानि यस्यां तथोक्तां । ताम्रपर
संरुद्धास्तोयबिन्दवः । षड्भिर्मासैर्घनीभूताः जायन्ते
इतिरत्नशास्त्र प्रसिध्येदमुक्तम् । अतएव ताराभिः नक्षत्रै
न्ततोऽयाक्षां दिवं गगनमिवस्थितां ताम्रपर्णीजलस्य
त्वादितिभावः । ताम्रपर्णीं तन्नाम्नीं नदीं भजेथाः सेवेथ
णर्यां पीतः आचान्तः सिन्धुः समुद्रः येन तस्य महर्षेः
स्येत्यर्थः । इदानीमुदितस्येतिभावः । उदेतियाम्यां हरि
केविंशतिमेह्यगस्त्यः । ससप्तमेस्तं वृषसंक्रमाच्च प्रयाां
भाणि । इतितस्योदयकालोक्तेः प्रत्यासत्या आसन्नतया

स्यास्स्वैरं सरसिजमुखा स्वादसंप्रीतचेता
शीतीभूत स्तरळलहरी वाहुसंश्लेषणेन ।
ध्यासीनः पुलिनमनिलै र्वीजितश्चन्दनाद्रे
श्रान्तिशान्ति गमयतुभवा न्सागरंलङ्घयिष्यन्॥ ॥५२॥

: निर्मलं विस्पष्टपटुवत्समासः । पानीयं जलं इदञ्च पाना
। ते तवमुक्तेव मुक्तामयः स्वार्थिकोमयट् तस्य भावं मौक्ति
। मुक्तः त्यक्तः आमयः व्याधिः येन तस्य भावं मुक्तामयत्वं
र्थः । परिणामयिता परिणामयिष्यति । परिपूर्वकान्नमतेर्णि
नभविष्यति कर्तरिलुट् । स्वयं मौक्तिकीभवन् ताम्रपर्णा
मात्रेण तवापि मौक्तिकत्वं संपादयिष्यतीति अद्भुतातस्पश
: । अगस्त्योदयेन निर्दोषं ताम्रपर्णीजलं तवारोग्यावहमि
* अत्र तारापूर्णादिवमित्युपमा । मुक्ताजाल जनितपुळिन
तत्संबन्धोक्तेरतिशयोक्तिः । अगस्त्यस्यैव भंग्यन्तरेण कथना
। हंसस्य मौक्तिकत्व परिणामासंबन्धेपि तत्संबन्धोक्तेरतिश
नाचमुक्तामयशब्द श्लेषभित्तिकाभेदाध्यवसाय मूलकातिशयो
तिसंकरः ॥ * सन्तानस्सन्ततौ गोत्रेस्यादपत्ये सुरद्रुमेइतिमे
देवौद्विस्त्रियामभ्रमित्यमरः. (५१)

गरलङ्घनाय ताम्रपर्ण्या श्रान्ति शमयेरित्याह तस्याइति॥
रं समुद्रं लंघयिष्यन् उत्तरिष्यन् सन् तस्याः ताम्रपर्ण्याः स्वैरं
यातथा सरसिजं पद्ममेव मुखं वदनं तस्यास्वादेन चुम्बनेन
ष्टं चेतः हृदयं यस्यतथोक्तस्सन् तरळाः चञ्चलाः लहर्यः महो
ाहवः भुजाः तैः संश्लेषणेन गाढालिङ्गनेन अत्रापि तस्याइत्य

सव्यंतस्याः कियदिवगत श्श्यामताळीतमालां
त्वत्प्रायाणां तरुणवयसां चेतसोनन्दयित्रीम् ।
वेलामब्धे र्विविधलहरी दत्तमुक्ताभिरामां
द्रक्ष्यस्यारात् द्विगुणपुलिनां केतकीनांपरागैः ॥

---

न्वेति । अशीतः शीतः संपद्यमानोभूतः शीतीभूतः पुळिनं द्वीपं सरसिजेमुखत्वस्य लहरीषु बाहुत्वस्यचरूपणात् पुळि मपि जघनत्वं प्रतीयते अध्यासीनः अधितिष्ठन् अधिशीङ धारस्य कर्मत्वं चन्दनाद्रेः मलयगिरेः अनिलैः मारुतैः वीि जनस्सन् श्रान्तिं श्रमं शान्तिं शमं गमयतु प्रापयतु । शेषे ः च्छन्दयोगे प्रथमपुरुषः । त्वं गमयेरित्यर्थः । गतिबुद्धीत्याि त्र्याश्श्रान्तेः णौकर्मत्वं अत्रवर्णनीये हंसे यदृच्छालब्धोत्स् संभोगासक्तोत्सुक नायकवृत्तान्तः प्रतीयतइतिसमासोक्तिः जमुखेत्यादि रूपकोत्थापितेतिसंकरः । अत्र संभोगशृङ्गार इतिसंक्षेपः ॥ * मन्दस्वच्छन्दयोः स्वैरइत्यमरः । तरङ्ग कलिकामहतित्विह । लहर्युल्लोलकल्लोलावितिहेमचन्द्रः.

अथ किञ्चित्तस्या वामपार्श्वे गत्वासमुद्रस्यवेलां द्रक्ष्यसी मिति ॥ तस्यास्ताम्रपर्ण्याः 'अस्य सव्यमित्यनेनान्वयः' मस्येति कियत् कियदिव किञ्चिदिव किञ्चिदित्यर्थः इव ः कारे । सव्यं वामभागं गतः यातस्सन् श्यामाः श्यामळाः ळवृक्षाश्च तमालाः तापिञ्छवृक्षाश्च ताळी तमालाः यस् विभाषावृक्षमृगेत्यादिना विकल्पेन द्वन्द्वस्यैकवद्भावाभावः । सदृशानि त्वत्प्रायाणीत्यस्वपदविग्रहः प्रायशब्दस्य उत्तरप वाचित्वमस्वपदविग्रहश्च, अतएव स्युरुत्तरपदेत्वमी । निभर

खातत्र क्षणमुभयत श्शैलशृङ्गावतीर्णो
तोभेदै रविगतगुणं चारुविष्फारघोषैः ।
ोकुर्व न्दशमुखपुरीं सौम्यपत्रप्रकृष्टो
ाचापं शरइवसखे वेगतस्त्वंव्यतीयाः ॥ ॥५४॥

ग्य इत्यत्रादिपदेन प्रायादीनामपिग्रहणम् । तेषांतरुणानि
नि वयांसि पक्षिणश्च तेषां । तरुणं वयः बाल्यादि अर्था
षां इतिचव्यज्यते । चेतसः चित्तस्य कर्मणिषष्ठी नन्दयित्रीं
ंधाभिः नानाप्रकाराभिः लहरीभिः माहावीचिभिः दत्ताः
क्ताः मौक्तिकानि ताभिः अभिरामां मनोहरां केतकीनां
परागैः पुष्परजोभिः द्वौगुणौ आवृत्तौ येपान्तानि । अभिवृ
याभूतानि पुळिनानि यस्याइति बहुव्रीहिगर्भितो बहुव्रीहिः
ुद्रस्य दक्षिणपूर्वस्येत्यर्थः वेलां तीरं आरात् समीपे द्रक्ष्यसि
॥ * अत्रप्रस्तुते समुद्रवेलावृत्तान्ते वर्ण्यमाने श्यामताळी
दे विशेषणैः सारूप्येण नीलवेण्या युवजनमनसो नन्द
जनसमर्पित मुक्ताहाराभिरामायाः विपुलजघनायाः वृत्ता
तेसमासोक्तिः । पुळिनानां द्विगुणत्वासंबन्धेपि तत्संबन्धोक्तेः
। समृद्धिमद्वस्तुवर्णनादुदात्तश्च ॥ * कियदित्यत्र किमिदं
तुपो वस्यघादेशे आयनेयीतिघस्यइयादेशः॥ * कालस्कन्ध
ापिञ्छोपीत्यमरः । प्रायोवयसिबाहुळ्ये तुल्यानशनमृत्यु
ा । वयः पक्षिणि बाल्यादौ वत्सरे यौवनेपिचेतिरत्नमाला।
ाब्दादि ज्येन्द्रियामुख्यतन्तुष्वितिरत्नमाला । वेलाब्धिती
कालमर्यादयोरपीतिरत्नमाला. (५३)
रेतं समुद्रवेलां व्यतीत्यगच्छेरित्याह स्थित्वेति॥ हेसौम्य

हेमनोज्ञ सखे मित्र । इदञ्च कार्यत्वरोद्दीपनाय समानचित्तवृ त्वमितिदर्शितमित्युक्तेः । तत्र सागरवेलायां क्षणं अल्पकालं नोरितिद्वितीया । स्थित्वा विश्रम्येत्यर्थः शरः बाणइव पत्राभ्य सहजाभ्यामितिभावः अन्यत्रबद्धाभ्यां प्रकृष्टः उत्कृष्टः । यद्व यस्यसः जातिकालसुखादिभ्यः परानिष्ठावाच्येतिनिष्ठायाः प हंसपक्षे पत्रेषु वाहनेषु प्रकृष्टइतिवा । त्वं दशमुखस्य रावणस्य लंकां अलक्ष्यं लक्ष्यं संपद्यमानं कुर्वन् लक्षीकुर्वन्. च्विः । बा शरव्यं हंसपक्षे उद्देश्यमित्यर्थः । उभयतः वेलायामेवस्थान श्चद्वयइतियावत् विद्यमानयोः शैलयोः अचलयोः । उभय विभक्तिकस्तासिः तस्यशैलशब्देन सुप्सुपेतिसमासः । शृङ्गाभ्यां अवतीर्णैः अधोनिस्सृतैः चारुः कर्णानन्दकरः योवि ध्वनिः स रवघोषः ध्वनिर्येषां चारुरितिघोषविशेषणंवा तैः प्रवाहविशेषैः अन्योन्याभिमुखं प्रसृत्यमिळितैरितिभावः आं गुणः मौर्वीयेनतथोक्तम् वेलासमुद्रतीरमेव चापः धनुः तं. (व वक्रत्वाच्चापरूपणम् वेगतः वेगात् व्यतीयाः व्यतिवर्तेयाः भेदैरधिगतगुणं वेलाचापमितिरूपकम् । चारुविष्फारघोषैः उभयतोवतीर्णैः चारुविष्फारघोषैरित्यनयोः प्राप्तगुणत्वं प्रति लिङ्गम् ॥ * सौम्योबुधेमनोज्ञेस्यात् अनुग्रेसोमदैवतइतिविश्व विकलतायां उत्सवपरतन्त्रतामुहूर्तेषु परमाणुकालभेदे घटीष थावसरे इतिरत्नमाला । पत्रं वाहनपक्षयोरित्युभयत्राप्यमरः शरव्यंचेति विष्फारोधनुषांस्वानइति स्रोतोम्बुसरणंस्वतइतिः

वासक्तं वनमिवनभ स्सन्ध्ययेवानुविद्धं
न्दूराङ्कं द्विपमिवहरिं स्वाम्बरेणेवजुष्टम् ।
द्युद्भिन्नं घनमिवसखे विद्रुमारण्ययोगा
ऐनैकं मिथुनमिवच द्रक्ष्यसिलंपयोधिम् ॥५५॥

---

द्रं द्रक्ष्यसीत्याह दावेति ॥ हेसखे विद्रुमाणां प्रवाळानां रस्य योगात् संबन्धात् हेतोः दावेन दवानलेन आसक्तं रण्यमिव सन्ध्यया सन्ध्यासमयेन अनुविद्धं संबद्धं नभः सिन्दूरं नागसंभवं अङ्कः चिह्नं यस्य तथोक्तं द्विपं गजमिव न अम्बरेण वाससा पीताम्बरेणेत्यर्थः जुष्टं संबद्धं हरिं विद्युता तटिता भिन्नं मिश्रं घनं जीमूतमिव देहेन शरीरे रमित्यर्थः नाम्नासुतीक्ष्णमित्यादाविव प्रकृत्या ... इतितृ स्त्रीपुंसात्मकं द्वन्द्वमिवचस्थितं । यदिकि...मिथुनं गौरांग्या मळेन पुंसाचघटितं एकशरीर...स्यात् तदिवचस्थितस्थि मारण्यस्यारुणत्वा त्सागरस्य श्यामळत्वाच्चेतिभावः । पयोधिं आलोकिष्यसे ॥ *अत्र विद्रुमारण्यानुविद्धस्य सागरस्य नामिवेत्युपमानानां बहूनां दर्शितत्वात् बहूपमा । देहेनैकं त्वतु अभूतोपमा इतिसंक्षेपः ॥ * अथविद्रुमः पुंसिप्रवाळं ते दवदावौवनारण्यवह्नी इतिचामरः । अन्यदारितमिश्रणु (५५)
मालाः

अस्मत्पूर्वैः स्सुरपतिहृतं द्रष्टुकामैस्तुरङ्गं
भित्वाक्षोणीं मगणितबलैः स्सागरोवर्द्धितात्मा ।
सत्कारार्थं तवयदिगिरी नादिशेद्गुप्तपक्षा
नश्रान्तोऽपि प्रणयमुचितं नैवबन्धोर्विहन्याः ॥

---

अथ हनूमतइव तवापिमैनाकादिमुखेन यदिसागरः प्र
तदा तं न विहन्याइत्याह अस्मदिति ॥ सुरपतिना इन्
तुरगं अश्वमेधीयं अश्वं द्रष्टुं कामः इच्छायेषांतैः तुंकाम
लोपः । अगणितं गणनातीतं बलं सामर्थ्यं येषान्तैः अ
पुरुषैरित्यर्थः क्षोणीं भुवं भित्वाविदार्यवर्द्धितः समेधितः अ
तथोक्तः सागरः समुद्रः तव मत्कार्याय प्रवृत्तस्येतिभावः स
रार्थं सपर्यार्थं अस्य आदिशेदित्यनेनान्वयः गुप्ताः वायुना
...ताः येषांतान् । गुप्तपक्षसमग्रश्च तवपित्राभिरक्षितइति
नाकोक्तेः गिरीन् शैलान् आदिशेदाज्ञापयेद्यदि दिश अ
स्मादाङ् पूर्वकात् संभावनायां कर्तरिलिङ् । अत्रगिरीनितिब
कस्येवान्येषामपि ...अभिप्रायं अतएवये पक्षिणः प्रयम
ष्टाइतिभावः । तदात्वं अश्रान्तोपि श्रममप्राप्तोपि बन्धोः ब
रस्येत्यर्थः तस्यास्मद्वंशभुत्वेनास्मत्सम्बन्धस्य तवापि बन्धुत्वादिति
युक्तं प्रणयं विस्रंभं नैवविहन्याः विहतं मैवकार्षीः ॥ * अ
त्यस्य क्षोणीभेदनं प्रीतिहेतुत्वात्काव्यलिङ्गम् वर्द्धितात्मेत्य
तादेशं प्रतिहेतुत्वात् तु अन्यदपि अगणितबलैरित्यस्य क्षो
रमित्यभिप्रायकत्वात् प परिकरः बन्धोरित्यस्य प्रणयविहति
तुत्वात्काव्यलिङ्गान्तराम् ॥ * बन्धुस्स्यात्पुंसि बन्धूकेमित्रे भ
इतिमेदिनी । प्रणयास्त्वमी विस्रंभयाच्ञाप्रेमाणइत्यमरः.

तत्रासीनः क्वचनसरसि स्मेरहेमारविन्दे
लब्धास्वादो मधुभिरमितै स्संविनीताध्वखेदः ।
द्रक्ष्यस्यग्रे लघुतरगति श्शेषमुल्लङ्घ्यसिन्धो
स्तोयाघाता न्मसृणितशिला रम्यवेलंसुवेलम् ॥ ॥

चेतस्य प्रणयस्याविष्कृतिप्रकारं वदन् किञ्चिदग्रेसुवेलं द्रक्ष्यसी
। तत्र आदेक्ष्यमाणतया संभावितेषु गिरिषु स्मेराणि ईषद्वि
। ष्मिङ् ईषद्धसने इत्यस्मात् नमिकंपीत्यादिनारप्रत्ययः ।
नां अरविन्दानि कमलानि यस्मिंस्तथोक्ते क्वचनकस्मिंश्चित् स
: अनेनास्यमानस तुल्यतया हंसप्रियत्वंव्यज्यते । हेमाम्भोरु
लं मानसस्याददानइति कालिदासोक्तेः । आसीनः उप
: भूयोभिः मधुभिः मकरन्दैः लब्धः प्राप्त आस्वादः पानंयेन
तएव संविनीतः सम्यङ्निवारितः अध्वखेदः मार्गश्रमोयेन तः
अतएव अग्रे पुरस्तात् लघुतरा अतिशयेन लघुः गतिः ग
गाभूतस्सन् । यद्यपि द्विवचन विभज्येत्यादिना अयमस्माल्लु
भज्योपपदेसत्येवतरबनुशिष्टः तथापि बौद्ध प्रतियोग्यपेक्षाया
ायिनिकाइति वामनोक्तेः बुद्धिकल्पित प्रतियोग्यपेक्षयापि घ
शादिवत्तरप्प्रयोगः । सिन्धोः सागरस्य शेषं अवशिष्टांशं उ
म्यतोयानां कल्लोलरूपाणां जलानां आघातात् आस्फाल
मसृणाः श्लक्ष्णाः कृताः मसृणिताः । मसृणशब्दात्तत्करोतीति
कर्मणिक्तः । तथाभूताभिः शिलाभिः शिलाप्रदेशैः रम्यारमर
ादाभूमिः यस्यतथोक्तं सुवेलं तन्नामानं शैलं द्रक्ष्यसि अवलं
अग्रेद्रक्ष्यसीतिवायोजना । * अत्र स्मेरहेमारविन्दइत्यस्य म

यस्यासन्ने पयसिजलधेस्त्वत्प्रतिच्छन्दचन्द्राः
पत्त्रच्छेदक्षरितरुधिरस्तोमसन्दर्शनीयाः ।
वीचीप्राप्तैर्विषमितरुचो मौक्तिकैस्तारकाभै
स्सन्ध्यामन्यां नियतमवनौ दर्शयन्तिप्रवाळाः

---

स्वाभिप्रायकत्वात्परिकरः । लब्धास्वादइत्यस्य अध्वखेदवि
विनीताध्वखेदइत्यस्य लघुतरगतित्वं प्रतिचहेतुत्वात्काव्यलि
घातादित्यादौ स्वभावोक्तिश्च ॥* मसृणो कर्कशेस्निग्धेइति
अथ सुवेलस्य समीपेपयसि कामपि शोभां द्रक्ष्यसीत्या
यस्य सुवेलस्य आसन्ने सन्निकृष्टे जलधेः समुद्रस्य पयसि
प्रतिच्छन्दः प्रतिबिम्बमेवचन्द्रः येषां तथोक्ताः पक्षयोः ग
त्सुवेलस्य' छेदेन छेदनेन क्षरितः सृतः यः रुधिराणां रक्त
निवहः सइव सन्दर्शनीयाः द्रष्टुं योग्याः, अनेन उत्तमत्वं द
बिम्बफलाकारं जपाकुसुमसन्निभम् । शुकतुण्डसमच्छायं
भनमित्युक्तेः । वीचीभ्यः तरङ्गेभ्यः प्राप्तैः लब्धैः तरङ्गोत्क्षेप
मागतैरित्यर्थः तारकाणां नक्षत्राणां आभाशोभेव आभाये
एव मौक्तिकानि तैः विषमिता अयथावस्थिताकृता रुक् व
तादृशाः पाटलाइतियावत् । प्रवाळाः विद्रुमाः अवनौ भूम
सिद्धसन्ध्यावैलक्षण्यमुक्तम् । अन्यां विलक्षणां सन्ध्यां
त्यर्थः । दर्शयन्ति नियतं प्रकाशयन्तीव प्रकाशयिष्यन्तीवेत
मित्युत्प्रेक्षाव्यञ्जकम् । * अत्रत्व त्प्रतिच्छन्दचन्द्राइतिरूपकम्
मसन्दर्शनीया इत्यत्र उपमोपक्रमोत्प्रेक्षा । मौक्तिकाभैरित्युप
त्थापिता प्रवाळानां विलक्षणसन्ध्याप्रकाशनोत्प्रेक्षेतिसंकरः

।रण्यं वरुणवसते र्वीचिवेगापनीतैः
तारत्न स्तबकशबलै र्विद्रुमैरुत्प्रवाळम् ।
।भीतै स्स्वयमनिमिषै राहृतस्थापितानां
ारारणां मधुपरिमळै र्वासितंमौळिदघ्नैः ॥ ॥५६॥

ीनीयाः दर्शनगोचरं गताः संजाताइतियावत् । शैलपच्च
ालं प्रवाळानामुक्तम् स्कान्दे । गिरीणां पतमानानां पक्षश्चा
नेपेतुः च्चतजा यत्र खनिस्तत्रव्यजायत । फुल्लकिंशुकसच्छा
ाज्ञिरइति । अत्रार्थेनालंकारविशेषः. (५८)
ाशिनष्टि यत्रेति॥ यत्रसुवेले अरण्यं विपिनं (कर्तृ) वरु
वसतिः स्थानं समुद्रइत्यर्थः तस्य वीचीनां ऊर्मीणां वेगेन
ाः निष्कासितैः । वरुणवसतेरितिपञ्चम्यन्तंवा तदा अपनी
। वीचयस्त्वर्थात्समुद्रस्येतिबोध्यम् । मुक्ताश्च रत्नानि अश्म
ा मुक्तारत्नानि । यद्यपि रत्नंमणिर्द्वयोरश्मजातौ मुक्तादिकेपि
त्नमणिशब्दौ सामान्यवचनौ तथापि मणिमुक्ताप्रवाळाना
गानुसारेणात्र रत्नशब्दोऽश्म जातिमात्रपरोद्रष्टव्यः । नातो
। एतेन मणिमुक्ताप्रवाळकृतसोपानैरिति भगवद्रामानुजा
ार्यैरनुसृतोतिबोध्यम् । तान्येवस्तबकाः गुच्छाः तैः शबलैः
द्रुमैः प्रवाळैः उल्लसितानि प्रवाळानि नवकिसलयानि यस्य
ासः रावणात् भीतैः त्रस्तैः भयभीतभीतीत्यादिना पञ्चमीस
मेषन्तीत्यनिमिषाः तैः दैवैः स्वयं स्वेन आहृता आनीताश्चते
ोपिताश्चेति स्नातानुलिप्तवत्समासः । पूर्वकालैकेत्यादिना
: पूर्वनिपातः । तेषां मन्दाराणां देवतरुविशेषाणां मौलिः

तस्मिन्दृश्या तदनुभवत श्चारुसौधावदाता
लङ्कासिन्धौ महतिपुळिने राजहंसीवलीना ।
त्वामायान्तं पवनतरळै र्यापताकापदेशैः
पक्षैरभ्यु ज्जिगमिषुरिव स्थास्यतिश्राव्यनादा ॥

---

शिखाप्रमाणमेषां मौळिदघ्नाः तैः प्रमाणेद्वयसज्जित्यादि॰ अपरिमितैरित्यर्थः मधुनः मकरन्दस्यपरिमळैः गन्धविशेषैः वासितं भावितं चतत् अस्तीतिसिद्धं । अस्तिर्भवन्तिपरोः अस्तीत्यनुशासनात्. नातः क्रियापदेनरहितमशरीरन्तदुच्च वकाशः । भवन्तिः वर्तमानकालः॥ * अत्र मुक्तारत्नस्तबक वाळमितिचरूपकद्वयम् । समृद्धिमद्वस्तुवर्णनादुदात्तंच ॥ प्रवाळोस्त्रीविद्रुमे नवपल्लवइति त्रिकाण्डशेषः । सुर विल्यमरः.

अथसुवेले स्थितस्य तत्र लंकानयनपदवीमारोक्ष्यतीत्य ति॥ तदनुसुवेलदर्शनानन्तरं तस्मिन् सुवेले स्थितस्येत्यध्य तस्मिन्नित्यस्य दृश्येत्यनेनान्वयः । लब्धसंस्थां त्रिकूटइति पू दक्षिणस्योदधेस्तीरे त्रिकूटोनामपर्वतः । सुवेलइति चाप्यन सत्तमाः इत्युत्तरकाण्डोक्ति विरोधाच्चेतिसंक्षेपः । भवतः त रिवेति कर्तरिषष्ठी । चारुभिः रुचिरैः सौधैः राजसदनैः अ अन्यत्रचारुसौधइव अवदाता महति विशालोन्नते सिन्ध पुळिने तोयोत्थितद्वीपे त्रिकूटरूपइतिभावः । लीनानिषण्ण राजहंसस्त्रीव लंका तन्नाम्ना नगरी दृश्या द्रष्टुं योग्या भा हारः । तस्मिन् दृश्या भवति भवतइतिपाठेतु दृश्याभवतीति

तार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
दान्ताचार्यस्य कृतिषु हंससन्देशे महाकाव्ये
प्रथमआश्वासः हरिःओम्.

---

विष्यतिलट्। तामेवविशिनष्टि। श्राव्यः रमणीयः नादः
स्याम्। हंसीपक्षेतुश्राव्यः श्रुतिमधुरः नादः स्वागतसूचको
तादृशी। यालंका आयान्तं दूरादागच्छन्तं त्वां (राजहंसं)
तरळैः चञ्चलैः पताकाः वैजयन्त्यइति अपदेशोव्याजो
गरुद्भिः अभ्युज्जिगमिषुरिव अभिमुख मुद्गन्तुमिच्छुरिव
सन्नन्तादुप्रत्ययः स्थास्यतिर्वर्ण्यते॥ यद्यपि पवनतरलाः
तदपदेशैरिति पताकास्वेव पवनतरलत्वं वक्तव्यं नपक्षेषुत
भेदाभेदप्रधानत्वात् अत्राभेदांशोपजीवनेन पक्षेषुतदुक्तिरि
॥ अत्र लंकाया राजहंसीतादात्म्य संभावनादुत्प्रेक्षा। साच
तत्वरूप गुणनिमित्तोपादानपूर्विका। ध्वजपटेषु पक्षत्वारो
ब्देन तद्धर्मनिह्नवात् कैतवापह्नुतिः। कैतवापह्नुतिर्व्यक्तौ
: पदैरितिलक्षणात्। तदुज्जीवितालंकायाः अभ्युद्गमनेच्छो
उत्प्रेक्षयोरपि परस्परसापेक्षत्वात् संकरः॥ * चञ्चलंतरळं
परिप्लवे इतिअमरः. (६०)
दान्ताचार्यः कविकाव्य प्रशंसादि काव्येऽवश्यम् विधी
स्वस्य काव्यस्यच नामगृह्णन् काव्यमध्ये आश्वासाख्यम्
माह इतीति॥ इति एवं प्रकारेण एवं प्रकारोवा अस्य
:। इति हेतुप्रकरण प्रकारादि समाप्तिष्विल्यमरः। कवयन्ति
यः काव्यकर्तारः। कविः पुमान् काव्यकर्तृ शुक्रवाल्मीकि

षु । खलीनेतु कविस्त्रीस्यादितिरत्नमाला । तर्कम् विदन्तीतितार्कि
काः । कवयश्च तार्किकाश्च तेषु सिंह इव सिंहः श्रेष्ठः तस्य ।
समाख्या आचार्याणां ज्ञाने प्रवचने वादे कवितायांचशक्तिम् स
ुष्टैर्विद्वदग्रे सुरैर्दत्ता। सर्वेषु निखिलेषु तन्त्रेषु सिद्धान्तेषु । तन्त्रं
स्यात् कारणेऽपिपरिच्छदे। शास्त्रे प्रधाने सिद्धान्तइत्यादिविश्वः।
म् वशीकरः स्वकृत्येषु यस्यतादृशस्य । सर्वसिद्धान्तेष्वसहाय
ः । स्वतन्त्रोऽपावृतस्वैरी स्वच्छन्दोनिरवग्रहइत्यमरः । इद
। श्रीरङ्गनायकयानुगृहीतं । प्रमाणंतुवक्ष्यते । वेङ्कटस्यशेषाद्रेः
मी श्रियानित्ययुक्तः श्रीमान् सचासौ वेङ्कटनाथश्च तस्य। इदञ्चर
ं शर्म । वेङ्कटेशावतारोऽयं तद्घण्टांशोऽथवाभवेत् । यतीन्द्रांशे
वितर्क्यापास्तुमङ्गळमित्युक्तरीत्या सद्भिर्वेङ्कटेशावतारत्वेन वित
तन्नामकृतमितिबोध्यं । वेदान्तेषु उपनिषदादिषु आचार्यस्य त
: । इदञ्चगुणनाम प्रसन्नेन भगवता श्रीरङ्गराजेन स्वासाधारणं स
हीतं । अत एव अधिकरण सारावल्यारंभे आचार्यैरेवोक्तं विश्वसि
ाणयनुविहितव्रता तेन देवेनदत्तां वेदान्ताचार्यसंज्ञामिति । महा
ं चण्डमारुतारंभे तुरगवदनतेजोबृंहिताश्चर्यशक्तिः कविकथ
सर्वतन्त्रस्वतन्त्रः । जयतिगुरुरबाधां वेदचूडार्यसंज्ञामनितरजन
मेतोरङ्गभर्त्रेति। अत्रवेदान्तपदमुभयवेदान्तपरं अतएवोक्तम् प्रति
करार्यैः, इह रङ्गपतिप्रसाद लब्धोभयवेदान्त धुरन्धरत्वकीर्तिः ।
तहधर्मिणी कृपात्ताखिलतन्त्र प्रभुताक एष सूरिरिति। अखिलत
सर्वतन्त्रस्वतन्त्रतेत्यर्थः । सर्वमिदमाचार्यैः भगवद्यामुनस्तोत्र भ
येन, स्वकर्मितिहरिदत्तं यामुनस्तोत्रवृत्त्या व्यवृणुत निगमान्ताच

ाणिसदसि सद्भिर्यस्समस्यासहस्त्री कविकथकमृगेन्द्रः सर्व
तिश्लोकेनसमाहृत्योक्तं॥ क्रियन्तइतिकृतयः कर्मणिक्तिन्
बहुवचनेन कृतीनां सर्वतन्त्रविषयत्वं सूचितं। अतएवोक्तं
परस्सहस्त्रं श्रीवेङ्कटेशेन कृताः प्रबन्धाइति । तासुमध्ये हंस
स्यकर्मणः संदेशः हंससन्देशः सन्देशश्चात्र वाचिककथनं
ोग्रन्धः हंससन्देशः। अधिकृत्यकृतेग्रन्थ इत्यणिलुबाख्या
ययस्य बहुळमितितस्य लुपिच प्रकृतिवल्लिङ्गता। आख्या
र्येत्यमरः। प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथांविदुः
ास्यात् सा मताख्यायिका बुधैरितिकेचित्। तत्कथाख्या
तेः संज्ञाद्व्याङ्किेतितिदण्डी। यद्वा हंसस्यसन्देशो यस्मिन्
व्य इतिव्यधिकरण बहुव्रीहिः तत् हंससन्देशमिति नपुं
शेषणं। प्रतिपाद्य प्रतिपादकयोरभेदोपचारेणात्राकाव्यं
। तस्मिन् हंससन्देशाख्य इत्यर्थः कवेः कर्मकाव्यं
े गणत्वाद्गुणवचनेत्यादिना कर्मणिष्यञ्। तच्च लोकोत्तर
ात्रिकर्मवर्णनरूपं। नतु भोजनादि। महच्चतत्काव्यं च महा
र महत्वंच नगराद्यष्टादशवर्णना रूपत्वं। न्यूनमप्यत्रयैः
व्यं नदुष्यति। यद्युपात्तेषु संपत्ति राराधयति तद्विद इति
कश्चिन्यूनतायामपि नदोषः। तस्मिन् प्रथमः आद्यः
विशेषः। सर्गाश्वासोल्लास गुच्छस्तबकाख्यान् पदेपदे।
ायेत्काव्ये पञ्चसप्तनवापिवा।दशद्वादशवा ऽदीर्घान्यावदिष्ट
। अत्र यावदिष्टमित्युक्त्यास्याश्वास द्वयात्मकस्य काव्यत्वं।

समासइतिशेषः । अत्र संदेशस्याश्वासार्थत्वात् संदेश संज्ञि
आश्वासशब्देनव्यवहृतः । संदेशेनहि संदेष्टु राश्वासोभवति

इति श्रीमन् नडादूरभिजनस्य मेलप्पाळयमग्रहारनिवास
वरददेशिकतनूभवस्य श्रीमद्वात्स्यवेदान्तदेशिकचरणारवि
श्रीमन्मुनित्रयसिद्धान्तनिर्धारणाचार्य श्रीमच्छ्रीनिवास मह
कटाक्षलब्धसत्संप्रदायस्य श्रीमद्भारतचक्रवर्तिनीपरितोष प्र
महोपाध्यायपदस्य श्रीमन्निगमान्तमहादेशिक निर्व्याजि
णाहपात्रस्य जामदग्न्यवात्स्यस्य श्री उभय श्रीरङ्गराजाचा
सन्देशप्रकाशे प्रथमः परिच्छेदः ॥

हरिः ओम्

श्रीरभिवर्धताम्.

---

शुभमस्तु

श्री हयवदन परब्रह्मणेनमः

द्वितीयाश्वास प्रारंभः

---

ीलाखेलं ललितगमना श्चारुनादंसशिञ्जाः
ल्लाक्षंत्वां स्मरशरदृशो गौरमापाण्डुराङ्ग्यः ।
ग्धालापं मधुरवचसो मानसाह्रमनोज्ञाः
त्रानीता स्सुरयुवतयो रञ्जयेयुस्समन्तम् ॥ ॥१॥

---

न्ते सुवेले स्थितस्य हंसस्य दृश्यतयोक्तां लंकां चतुर्भिः तत्र रावणेनानी तास्सुरयुवतयः त्वां रञ्जयिष्यन्तीत्याह॥ लितं रुचिरं गमनं यासांताः. हारभेदे विलासेचललितं तिकोशः । शिञ्जया भूषणध्वनिना सहवर्तन्तइति सशिञ्जाः। शिञ्जितमित्यमरः । स्मरस्य मन्मथस्यशराः बाणभूताःदृशः ष्टर्यः यासान्ताः पक्ष्मळदृशां दृशांकोणोबाण इत्यादि मन्मथ अत्र स्मरशरत्वस्य चूतादिसाधारण्यात् हर्षण रोचन द्रावण नीत्युक्त बाणपञ्चकसाधारण्याच्च स्मरशरा अरविन्दानी ति नव्याख्यातं। आपाण्डुराणि समन्ततः श्वेतानि विरहेर्ण ङ्गानि अवयवाः यासान्ताः अङ्गगात्रकण्ठेभ्य इतिवक्तव्य धुराणि श्राव्यानिवचांसि आलापाः यासान्ताः। मनोज्ञाः ीताः रावणेनाहृताः यत्र लंकायां स्थिताइतिशेषः सुराणां ः तरुण्यः लीलया खेलतीति लीलाखेलः तं चारुः श्रोत्र ञ्चनिर्यस्यतं भल्लीबाणविशेषाविव अक्षिणीयस्यतं बहुव्रीहौ

उग्रेशशापे रुपहतिभिया रक्षसादूरमुक्ताः
दग्धुंयोग्यां हुतवहमपि त्वत्प्रियावर्णशुद्धाः ।
उत्पश्यन्तो जनकतनया तेजसैवस्वरक्षां
रोधंयस्या मनुविदधते लोकपालावरोधाः ॥

सक्थ्यक्ष्णोरितिषच् भल्लातमकाक्षिमन्तीमितिच प्रतीयते रा क्षोमराळो वाटराटक इत्युत्पलमाला । गौरं पाण्डुरवर्णं मु आलापः ध्वनिविशेषः यस्यतं । मुग्धस्सुन्दरमूढयोरितिविश्व मनसः अर्हं मनोहरमित्यर्थः । मानससरोहंमितितुतत्वं । स्वान्तइतिमेदिनी । त्वां समक्षं अक्ष्णोभिमुखमित्यर्थः प्रतिप इतिसमासान्तष्टच् रञ्जयेयुः रञ्जितं कुर्युः प्रीतं कुर्युरित्यर्थ स्ताः त्वयादृष्टास्सत्यंस्त्वामनुरक्तं कुर्युरितिभावः । सालंकार न्वयः एवं उत्तरश्लोकत्रयेपि ॥

अत्र ललितगमनादीनां सुरयुवति राजहंसधर्माणां यथ तिबिंबभावेन परस्परसादृश्यप्रतीतेः तासां तस्यच अन्योन्य रञ्जनं प्रति परस्पर सादृश्यस्यहेतुत्वात् काव्यलिङ्गं । भल्ला अस्मिन् श्लोके मेघसन्देश द्वितीयाश्वास प्रथमश्लोकच्छाय समाधिर्नामगुणः तदुक्तं वामनेन अर्थदृष्टिः समाधिरिति। अ सैवसमाधिरित्युच्यते. समाहितं चित्तमर्थान् पश्यतीतिभा विधः अयोनिरन्यच्छायायोनिर्वेति । अयोनिः अनन्यकार कारणइत्यर्थः । अन्यस्य काव्यस्ययाच्छाया तद्योनिर्वेत्य न्तरेष्वपिद्रष्टव्यम्.

अथ नकेवलं सामान्यास्सुरयुवतयएवरावणेनानीताः ।

अध्यासीना बहुमणिमयं तुङ्गशृङ्गंत्रिकूटं
दिक्पालेषु प्रथितयशसा रक्षसारक्ष्यमाणा ।
अग्रेमेरो रमरनगरीं यापरिष्कारभूम्ना
त्वाहूयेव ध्वजपटमया नग्रहस्तान्धुनोति ॥ ॥३॥

---

न्त इत्यन्तार्थस्य हेतुत्वादन्यत्काव्यलिङ्गं । उत्पश्यन्त इत्य दग्धुंयोग्या इत्यस्यहेतुत्वात् अपरं काव्यलिंगं। त्वत्प्रियावर्ण ना । लोकपालावरोधानामपि रोधानुविधानोक्त्या अननुरूपघ विषमालंकारः. (२)

नाया: अमरावत्यपेक्षया अतिशयितं वैभवं वर्णयति ॥ अध्या बहुमणिमयं नानाविधरत्नप्रचुरं प्राचुर्यर्थेमयट् । इदञ्चमेरुसा र । तुङ्गं उन्नतं शृङ्गं शिखरं यस्यतादृशं इदञ्चविशेषणं शिख टस्य प्रांशुचैकं दिविस्पृशमित्यारभ्य निविष्टातत्रशिखरे लंका तेत्युक्त्या त्रिकूटस्य कस्मिंश्चिच्छृंगे लंकास्थितिद्योतनाभिप्रा कूटं तन्नामानमचलं अध्यासीना अधितिष्ठन्ती. अधिशीङ् मेत्याधारस्य कर्मत्वं सुवेलमितिपाठस्तुनोचितः लब्धसंस्थां नक्रमविरोधात् । अत्रवक्तव्यशेषः तस्मिन्दर्शयेति श्लोकव्याख्या दिक्पालेषु अष्टदिक्पालकेष्विन्द्रादिषु. निर्धारणेसप्तमी. प्रथितं शः यस्यतथोक्तेन रावणस्य नैरृतश्रेष्ठत्वादितिभावः रक्षसा राव माणा पाल्यमाना अनेन प्रशंसावचनेन रामभद्रस्य गंभीरस्सारस वानविकत्थनः । परकीयगुणग्राही धीरोदात्तोनिगद्यत इत्युक्त र्यञ्जिता । यालंकापरिष्कारस्य अलंकारस्यभूम्ना बाहुल्येन शब्दः अमरनगरीतोस्याः अतिशयित परिष्कारस्वरूपं वैलक्ष

संपद्यमाना मृता भस्मीभूता तां वह्निनेत्यनेन पावकस्य हनूर्मा
द्योतितं तां लंकां विश्वकर्मा सुरशिल्पी आदिः येषान्ते विश्वः
शिल्पिनोरित्यमरः । आदिपदेनमयादयोगृह्यन्ते अन्तः हृदये
भयात् बहिस्त्रासाभिनयमात्रस्य अवधानं प्रति अहेतुत्वद्यो
श्शब्दः अवहिता अवधानयुक्ता प्रमादरहितेत्यर्थः धीः बुद्धिः
तास्सन्तः प्रत्यादिष्टा निराकृतातिरस्कृतेत्यर्थः प्रथमरचना प्र
ल्पना यस्मिन्कर्मणि तद्यथातथा प्रथमरचनापेक्षयातिशयितर
तयेत्यर्थः । प्रथमरचनामितिपाठे लंकायाविधेयविशेषणं । अवः
संविधास्यन्ति निर्मास्यन्तीत्यर्थः । संविपूर्वकाद्दधातेः कर्तरिल
भस्मीभावापेक्षया संविधानस्य भविष्यत्वाल्लृट् नतुशब्द प्रयोग
रूपवर्तमान कालापेक्षया। एवमेवाचार्यप्रणीते यादवाभ्युदयकाव
विमोहने वहुवगेहिनीनां नब्रह्मचर्यं बिभिदे तदीयं । संपत्स्य
जीवनं तत् सत्येनयेनैव सतां समक्षं इत्यत्र संपत्स्यतइति ि
लमपेक्ष्यलृट् प्रयोगः इति तद्व्याख्याता समवानप्पय्यदीक्षि
काळिदासेन कुमारसम्भवे ५-१४, अतन्द्रितासास्वयमेववृक्षकान्
प्रस्नवणैरवर्धयत् । गुहोपियेषां प्रथमात्तजन्मनां नपुत्र वात्सल
ष्यतीत्युक्तम् - तत्रहि - वृक्षसंवर्धनात्पराचीनत्वमात्रेण नापाक
भविष्यत्प्रयोगः । यतश्च योगानुशासन ४ पाद ३३ सू. भाष
प्रश्न एकान्तवचनीयः सर्वोजातोमरिष्यति. ओंभोइति' इतिभग
सन भाषितं. तत्रहि जननापेक्षया भविष्यत्येवलृट् नतुवर्तः
त्यवगन्तव्यं। एवंवदिक् पूर्वस्मिन्नाश्वासे वर्तिष्यन्ते वितमसिपद
तिबोद्धव्यं । यदालंका भस्मीभूता ततो रावणवशवर्तिनो विश्वक

